# श्रीमद्भगवद्गीतायाः

## विज्ञानभाष्यम्

(काण्डचतुष्टयात्मकम्)

जयपुरराजसभा-प्रधानपण्डित-वेदरहस्योद्घाटनप्रवण—
महामहोपदेशक-समीक्षाचक्रवर्त्ति—
विद्यावाचस्पति-श्रीमधुसूदनशर्म्म—
मैथिल-प्रणीतम् ।

---

तत्रेदं

### द्वितीयं शीर्षककाण्डापरपर्यायं

मूलकाण्डम्

जयपुरमहाराजसंस्कृतकालेजाध्यक्ष
म० म० श्रीगिरिधरशर्म्मचतुर्वेदेन
संपादितम् ।

---

श्रीजयपुरराज्य की सहायता से इलाहाबाद
लॉ जर्नल प्रेस, इलाहाबाद में छपवा
कर प्रकाशित किया गया।

वि० सं० १९९५

# श्रीमद्भगवद्गीतायाः

## विज्ञानभाष्यम्

(काण्डचतुष्टयात्मकम्)

जयपुरराजसभा-प्रधानपण्डित-वेदरहस्योद्घाटनप्रवण—
महामहोपदेशक-समीक्षाचक्रवर्त्ति—
विद्यावाचस्पति-श्रीमधुसूदनशर्म्म—
मैथिल-प्रणीतम् ।

---

तत्रेदं
द्वितीयं शीर्षककाण्डापरपर्यायं
मूलकाण्डम्

जयपुरमहाराजसंस्कृतकालेजाध्यक्ष
म० म० श्रीगिरिधरशर्म्मचतुर्वेदेन
संपादितम् ।

---

श्रीजयपुरराज्य की सहायता से इलाहाबाद
लॉ जर्नल प्रेस, इलाहाबाद में छपवा
कर प्रकाशित किया गया।

वि० सं० १९९५

॥ श्रीः ॥

# सारांश

## २—द्वितीय मूल काण्ड।

विषय प्रवेश के लिये आदि मे संस्कार शब्द का रहस्यमय विवेचन है और आगे अव्यय पुरुष और बुद्धियोग ये गीता के मुख्य प्रतिपाद्य हैं इस 'प्रथम काण्डोक्त प्रतिज्ञा को दोहरा कर प्रथम काण्डोक्त बुद्धियोग का स्वरूप कुछ विशेषता के साथ पुनः कथित हुआ है और बुद्धियोग के चारों लक्षण गीता में कहां कहां आये हैं—इस पर संक्षिप्त संकेत है। आगे पुनः राजर्षि विद्या, सिद्धविद्या, राजविद्या और आर्षविद्या—इनके ही नामान्तर वैराग्ययोग, ज्ञानयोग, भक्तियोग, कर्मयोग इन ४ विद्याओं का सङ्केत कर भगवान् को किस विद्या पर विशेष प्रीति है यह सिद्ध किया है। आज किस २ विद्या में कितने उपनिषद् और किस २ उपनिषद में कितने उपदेश हैं और किन २ उपनिषदों में कितने कितने श्लोक हैं इसको तालिका दी गई है। श्लोकों के क्रम से भी इन बातों को बताई गई है। इसके आगे गीता का मूल पाठ दिया गया है। उसमें चार विद्या, २४ उपनिषद् और १६० उपदेशों का शीर्षकों द्वारा स्पष्ट विभाग कर दिया है। इसके शीर्षक बहुत महत्व की वस्तु हैं। उनसे ही उन उपदेशों का सार प्रदर्शित होगया है। स्थान २ पर महत्त्वपूर्ण टिप्पणियाँ भी हैं जिनसे गीता के प्रतिपाद्य रहस्य पर बहुत प्रकाश पडता है। यह काण्डगीता पाठ करने वाले विद्वानों के लिये अत्यन्त लाभदायक है।

म. म. पं. गिरिधर शर्मा चतुर्वेदी।

———

पृष्ठ-संख्या

॥ श्रीः ॥

# शीर्षककाण्डापरपर्यायं

## मूलकाण्डम्



---

ओं तत्सत्

# अथ श्रीमद्भगवद्गीताया विज्ञानभाष्यस्य शीर्षककाण्डापरपर्यायं मूलकाण्डं नाम द्वितीयं काण्डं प्रारभ्यते ।

## तत्र 'उपोद्घातः' प्रथमं प्रकरणम् ।

### (शास्त्रोद्देश्यम्)

आत्मसंस्कारार्थानि हीमानि सर्वाणि शास्त्राणि लोके प्रवर्तमानानि दृश्यन्ते । दोषमार्जनम्, गुणाधानम्, हीनाङ्गपूर्तिश्चेति त्रिविधाः संस्कारा भवन्ति। यतः स्वस्य परस्य वात्मनि दुःखान्यापद्यन्ते, स दोषः। तत्कारणोच्छेदो दोषमार्जनं संस्कारः। यतस्तु स्वस्य परस्य वा सुखानि संपद्यन्ते, स गुणः। तत्कारणस्थापनं गुणाधानं संस्कारः। अङ्गविकलस्यात्मनः साकल्यसंपादनमङ्गपूर्तिः संस्कारः। तेषु च दोषमार्जनं मुख्यम्। दोषदुष्टे तदितरसंस्कारायोगात्, उत्तरसंस्कारयोर्दोषमार्जनसंस्काराधीनत्वात्। न हि मलिने वस्त्रे पीतरक्तादिरञ्जनव्यापाराः साधूपपद्यन्ते। अतश्च दोषमार्जनसंस्कारोपायप्रदर्शनं शास्त्राणां मुख्यो विषयः ॥

### (विषयविभागः)

अस्ति हीयं भगवद्गीतोपनिषत् तावदेकं भगवदुपदिष्टं विज्ञानशास्त्रम् । तत्परिचयाय तावदिमे श्लोका उच्यन्ते—

१—गीताशास्त्रमिदं सप्तशतश्लोकात्मकं मतम् । (७००)
ब्रह्मविद्याभिधं शास्त्रं योगशास्त्रं च तद् विदुः ॥१॥
२—गीताशास्त्रप्रकरणं द्वेधा तावद् विभज्यते ।
ऐतिहासिकमस्त्यन्यदन्यद् वैज्ञानिकं पृथक् ॥२॥
चतुःषष्टिमिताः श्लोका इतिहासप्रसङ्गगाः (६४) ॥
वैज्ञानिकास्तु षट्त्रिंशत्-पर-षट्शत-(६३६) संख्यकाः ॥३॥
३—वैज्ञानिकप्रबन्धस्य मध्ये विद्याचतुष्टयी ।
उपक्रमोपसंहारौ तस्या आन्तयोः पृथक् ॥४॥
तेषु षट्सु विभागेषु वरोपनिषदः (२४) स्थिताः ॥
एका-ष्टौ-द्वे च-तिस्रश्च-सप्त-तिस्र-इति क्रमात् ॥५॥
(१) (८) (२) (३) (७) (३)

४—उपदेशांश्च तेष्वेव विभागेषु विभावयेत् ।
ख——न्म——ध्या——र्ग——द्व——जान् क्लृप्तान् पश्येदुपनिषत्सु तान् ॥६॥
(२)–(५०)–(१९)–(३२)–(४९)–(८)
पञ्चाशदुपदेशास्तु सप्त सप्त च सप्त च । (७।७।७।३।३।५।९।९)
त्रयस्त्रयः पञ्च नव नवेत्यष्टासु ते क्रमात् ॥७॥ (५०)
क्रमाद् दश-नवेत्येवं द्वयोस्तत्रोनविंशतिः ॥ (१९)
(१०) (९)
तिसृषूपनिषत्स्वेकादश पञ्चदशाथ षट् ॥८॥ (३२)
(११)–(१५)–(६)
अथ सप्तोपनिषदां नव-पञ्च च–सप्त च ॥
(९)–(५)–(७)
चत्वारो विंशतिर्द्वौ द्वावुपदेशाः प्रकीर्तिताः ॥९॥ (४९)
(४)–(२०)(२)(२)
चातुर्विद्योपक्रमे तूपदेशौ द्वौ प्रतिष्ठितौ ॥ (२)
(२)
चातुर्विद्योपसंहारे चतुष्कं च द्विकं द्विकम् ॥१०॥ (८)
(४)–(२)–(२)
५—इत्थं गीतोपदेशानां संख्या षष्टयधिकं शतम् । (१६०) ॥
तत्रोपनिषदां संख्या चतुर्विंशतिरिष्यते ॥११॥
विद्याचतुष्टयी गीता बुद्धियोगचतुष्टयी ॥
एतावदिह गीताया हृदयं परिदर्शितम् ॥१२॥

---

## (शास्त्रान्तरवैलक्षण्यम्)

**अपि च—**

१—सर्वदुःखक्षयोपाया आत्मविद्याश्चतुर्विधाः ॥
चतुर्विधा बुद्धियोगा—इति गीता प्रवक्ति नः ॥१॥
२—शास्त्रान्तरेषु त्वात्मायं क्षराक्षरविधो धृतः ॥
जायते म्रियते भुङ्क्ते नानाकर्म्मफलानि सः ॥२॥
आत्मा विद्याकर्म्ममयस्त्वव्ययः पुरुषः परः ॥
अपूर्वः सर्वशास्त्रेभ्यो गीतायामिह दर्श्यते ॥३॥
३—कर्म्मयोगो भक्तियोगो ज्ञानयोग—इति त्रयः ।
शास्त्रान्तरेषूपदिष्टा योगा निष्ठाप्रभेदतः ॥४॥
कर्म्मसंन्यासयोगं तु प्रत्याख्यायैव सर्वथा ।
अपूर्वो बुद्धियोगोऽत्र गीतायामुपदिश्यते ॥५॥
'न कर्म्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ॥
न च संन्यसनादेव सिद्धिं समधिगच्छति' ॥६॥
'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' ॥
कर्म्मैव कर्म्मणो बन्धं निवर्तयति मुक्तये ॥७॥

४—इयं गीता ब्रह्मविद्याऽव्ययब्रह्मनिरूपणात् ।
अपि गीता योगशास्त्रं बुद्धियोगोपदेशतः ॥८॥
शास्त्रान्तरप्रसिद्धानामात्मनां परमात्मनि ।
अव्ययेऽस्मिन् प्रतिष्ठास्ति शुक्रं ब्रह्मामृतं हि तत् ॥९॥
कर्म्म-भक्ति-ज्ञान-योगा बुद्धियोगात् पृथक् कृताः ।
नात्यन्तं श्रेयसे शक्ता वैषम्याज्ज्ञानकर्म्मणोः ॥१०॥
५—सर्वशोकशमोपाया बुद्धियोगाश्चतुर्विधाः ॥
वैराग्यं ज्ञानमैश्वर्य्यं धर्म्म—इत्यभिधानतः ॥११॥
एषां चतुर्णां या विद्यास्तासां गीता प्रकाशिका ।
चतुर्विधास्ता राजर्षि—सिद्ध—राजार्ष—भेदतः ॥१२॥
पुरायुगे भिन्नभिन्नसमाजेष्वनुवर्तिताः ।
या आसंस्ताः समाहृत्य गीतायामत्र दर्शिताः ॥१३॥
विद्याचतुष्टयी गीतानाम्ना भगवतोदिता ।
ब्रह्मविद्यास्ति सा योगशास्त्रं चेदमिति स्थितिः ॥१४॥

---

## (आत्मसंग्रहः)

तस्य च गीताशास्त्रस्यात्मनि दुःखोदयहेतुभुताऽविद्यालक्षणमहादोषोपशमनोपायप्रदर्शनं मुख्यो विषयोऽस्तीति विज्ञेयम् । तथा हि—आत्मा तावद् द्विविधः—निर्धर्म्मकः ,सर्वधर्म्मोपपन्नश्च । तत्र निर्धर्म्मकस्तावदयमद्वैतलक्षणो निर्गुणो निर्विशेष आत्मा शास्त्रानधिकृतो भवति, अवाङ्मनसगोचरत्वेनानिर्वचनीयत्वात् । अथ सर्वधर्म्मोपपन्नोऽप्येक एव सन् द्विविधो विवक्ष्यते—सर्वधर्म्मविशिष्टः, सर्वधर्म्मयोग्यश्च । तत्र सर्वधर्म्मविशिष्टः परात्परोऽयमभयो नामात्मा । सोऽपि शास्त्रेऽनधिकृतो भवति—अव्यावृत्तरूपतया विधिनिषेधसमर्पकेऽस्मिन् शास्त्रे तदुपपादनायोगात् ।

अथ यः सर्वधर्म्मयोग्यः, स खलु प्राणादिपञ्चप्रकृतिविशिष्टस्त्रिपुरुषः । स च नानाधर्म्मयोगितया द्वैतलक्षणः सगुणः सविशेषो न आत्मा ।

तस्मिंश्चायम्-**अव्ययः-अक्षरः-क्षरः**—इत्येते त्रयः पुरुषाः—एकः पुरुषो गूढोत्मा नामास्माकमन्तरतमो मुख्य आत्मा। तत्रैव चात्मनि विश्वव्यापीश्वरप्रकृतिरूपब्रह्माश्वत्थसहसंप्रयुक्तकर्म्माश्वत्थनिबन्धनाविद्याबुद्धिचतुष्टयाकस्मिकसंसर्गजनिताःपञ्चक्लेशकर्म्मविपाकाशयप्रभृतयः सर्वे दोषाः संप्रवर्तन्ते, अनुवर्त्तन्ते, संप्लवन्ते च। तत्र तावदेतस्याव्ययस्य द्वौ धातू रूपे भवतः—**विद्या च कर्म्म** चेति। **आनन्दो विज्ञानं मन** इति पर्वत्रयी विद्या नाम। अविद्यान्धकारविरोधिनो ज्योतिर्म्मयस्यैतस्य पर्वणो मुक्तिसाक्षित्वात्। अथ **मनः प्राणो वागिति** पर्वत्रयं कर्म्म नाम। वीर्य्यरूपस्यैतस्य पर्वणः सृष्टिसाक्षित्वात्। अस्यैव च विद्याकर्म्मकृतरूपस्य **सम्यग्ज्ञानान्यथाज्ञानाज्ञानवतः सुकर्म्मविकर्म्माकर्म्मवतश्चा**त्मनः सर्वदोषनिवृत्तिपूर्वकाखिलकल्याणगुणाधानलक्षणसंस्कारोपपत्त्यर्थं भगवद्गीताप्रभृतीनि सर्वाणि शास्त्राणि प्रवर्तन्ते ॥

## (बुद्धिभेदाः)

अथैतस्य पुरुषस्य येयं प्राणादिपञ्चलक्षणा प्रकृतिः, तत्र वाङ्मयी तृतीया प्रकृतिर्बुद्धिर्नाम। अष्टौ च बुद्धिभेदा भवन्ति—चतस्रस्तावद् विद्याबुद्धयः, चतस्रः पुनरविद्याबुद्धयश्चेति। **धर्म्मः**[१],

**ज्ञानम्**[२], **वैराग्यम्**[३], **ऐश्वर्य्यम्**[४]—इति—विद्याबुद्धयो भगनामानः। अथ **मोह**नाम्न्यविद्या[१], **अस्मिता**[२], **रागद्वेषौ**[३], **अभिनिवेशः**[४]—इत्यविद्याबुद्धयः क्लेशनामानः। तत्र **धर्म्मेणाभिनिवेशो, ज्ञानेन मोहो, वैराग्येण रागद्वेषौ, ऐश्वर्य्येणास्मिता** चेति पुरुषात्मनि प्रयत्नादाहितैर्विद्याबुद्धिविशेषैरविद्याबुद्धिविशेषा बलानुसारान्निवर्त्यन्ते, प्रतिद्वन्द्वितया सहावस्थानायोगात्। अविद्याबुद्धयश्चैतस्मिन्नात्मनि—अविज्ञातनिमित्तोपस्थितिसमयानां कालक्रमोपपन्नानां कर्म्मविशेषाणां प्रभावात् स्वयमेवोपपद्यन्ते। तथा हि—

कर्म्मजनितशरीरप्रवर्त्तितकर्म्मलक्षणाया जन्ममृत्युपरम्परायाः कर्म्माश्वत्थतया तत्पारतन्त्र्येणाकस्मादिहात्मनि स्वयमविद्याबुद्धयः संक्रमन्ते। तेनावरणाच्चायमात्मनो विद्याभागस्तमश्छन्नो भवतीत्येष जीवात्मा पुरुषः स्वगतैरविद्यादोषैः क्लेशकर्म्मविपाकाशयादिभिः पर्य्याक्रान्तो विषीदति। तेषामेवाविद्यादोषाणां समूलोच्छेदाय प्रवर्त्तमानमिदं गीताशास्त्रमविद्यासमुत्थापितशोकव्युत्थानार्थमावरणलक्षणाविद्याविनाशोपायान् प्रदर्शयति। **विद्योदयप्रकर्ष एव चाविद्याविनाशहेतुः।** तस्मादस्या गीताया विद्योदयोपायप्रदर्शनमेव मुख्यः शास्त्रार्थः।

## (बुद्धियोगनिष्कर्षः)

ब्रह्मविद्या हीयं गीता प्रतिपत्तव्या। अव्ययपुरुषो हीदं ब्रह्म। तस्य द्विविधा चेयं विद्या विज्ञायते—अव्ययपुरुषभक्तिरात्मलक्षणा प्रथमा। बुद्धिभक्तिः प्रकृतिलक्षणा द्वितीया। तथा चाव्ययभक्तावात्मरूपायां विद्यायां बुद्धिभक्तेः प्रकृतिरूपाया विद्याया योगो **बुद्धियोगो** नामाख्यायते। तस्यापीदं शास्त्रं भवति, तस्मादिदं योगशास्त्रं नाम। स चायं बुद्धियोगश्चतुर्विधो भवति, निवर्तनीयानामविद्यादोषाणां चतुर्विधतया तन्निवृत्त्युपायभूतानां विद्याबुद्धीनामपि चातुर्विध्येनैव गृहीतत्वात्। तैः पुनरेतैश्चतुर्विधैरपि **बुद्धियोगैः** समष्ट्या व्यष्ट्या वा संप्रयुक्तैरात्मविद्यायां बुद्धिविद्याया अभिव्याप्तेरात्मनि प्रविष्टानामविद्यादोषाणामैकान्तिकी निवृत्तिर्भवति, विद्याबुद्धेरविद्याबुद्धिनिवर्तकत्वात्। तथा चैतादृश**बुद्धियोग**चतुष्टयोपपादनमेवेदं भगवद्गीताशास्त्रमस्तीति विज्ञेयम्।

---

## (बुद्धियोगभेदाः)

### तत्र चेदमित्थं बुद्धियोगचतुष्टयं भवति

(१) **रागद्वेष**लक्षणक्लेशजनितशोकसमुत्थानप्रतिबन्धहेतु**र्वैराग्यबुद्धियोगः।** तदुपायविज्ञानं **वैराग्यविद्या। अनासक्ति**र्हि वैराग्यविद्याया रहस्यम्। कामक्रोधनिबन्धनासक्तेरविद्याबुद्धेर्विद्याप्रतिबन्धिकायाः सहसंप्रयोगे तदासक्त्या विषयविशेषसमाकृष्टाया विद्याबुद्धेरात्मविद्यायां योगो **न** संभवति।

"यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः॥
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः"—इत्युक्तेः॥

तस्मादव्ययविद्यायामञ्जसा बुद्धिविद्याप्रवेशाय विक्षिप्ताविद्याबुद्धिसहयोगजनितबुद्धिविक्षेपनिवृत्तये तावदियम**नासक्ति**र्द्वारमपेक्ष्यते। अत एवेह वैराग्यविद्यायामनासक्तिशिक्षा विशिष्यादिश्यते। वृत्तौ **समत्वं** च वैराग्यं बुद्धियोगसिद्धिलक्षणं विद्यात्। रागद्वेषयोरात्यन्तिकनिवृत्तिश्चेह **समत्वं** नाम। अथवा विद्याकर्म्मप्रसङ्गजनितोच्चावचभावराहित्यलक्षणं स्थितप्रज्ञत्वं **समत्वं** भवति।

**"योगस्थः कुरु कर्म्माणि सङ्गं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते** ॥२।४८॥

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः।**
**निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ।।५।१९।।**
**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ।।६।२९।।**
**आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन!।**
**सुखं वा यदि वा दुःखं स योगी परमो मतः।।** (६।३२)
इत्यादिव्यवहारदर्शनात् तथैवोपपत्तेः ।।१।।

(२) अथ अविद्यासंज्ञक**मोह**लक्षणक्लेशजनितशोकसमुत्थानप्रतिबन्धहेतु**र्ज्ञानबुद्धियोगः।** तदुपायविज्ञानं **ज्ञानविद्या। अन्तर्ज्योति**र्हि ज्ञानविद्याया रहस्यम्। ज्ञानान्यथाज्ञानाज्ञानत्रयस्य-कर्म्माकर्म्म-विकर्मत्रयस्य च मिथःसंघर्षप्रवगतानिबन्धनो **मोहो** नामा**विद्याबुद्धि**र्जायते, तस्या विद्याप्रतिबन्धिकायाः सहसंप्रयोगे तन्मोहान्धकारग्रस्ताया विद्याबुद्धेरात्मविद्यायां योगो न संभवति। तस्मादव्यय-विद्यायामञ्जसा बुद्धिविद्याप्रवेशाय मोहान्धकारनिवृत्तये ताव**दन्तर्ज्योति**र्लक्षणं **ज्ञानं** विद्याबुद्धेरव्यय-विद्यायां प्रवेशद्वारमपेक्ष्यते। अत एवेह ज्ञानविद्यायां **ज्ञानविज्ञानलक्षणान्तर्ज्योतिः**शिक्षा विशिष्यादिश्यते। तुष्टिश्चेह ज्ञानबुद्धियोगसिद्धिलक्षणमिति विद्यात् ।।२।।

(३) अथ **अस्मिता**लक्षणक्लेशजनितशोकसमुत्थानप्रतिबन्धहेतु**रैश्वर्यबुद्धियोगः।** तदुपाय-विज्ञान**मैश्वर्य्यविद्या। ईश्वरानन्यभक्तिस्त्वे**तस्या ऐश्वर्य्यविद्याया रहस्यम्। अत्यल्पशक्तेर्जीवात्म-बुद्धे**रस्मिता**लक्षणाविद्यारूपतया विकासाभावलक्षणशैथिल्यादप्रवृत्तौ बुद्धिविद्याया अव्ययात्मविद्यायां योगो न संभवति। तस्मादव्ययविद्यायामञ्जसा बुद्धिविद्यायाः प्रवेशाय बुद्धेः कुण्ठितत्वनिवृत्तिपूर्वकं शक्तिविशेषोद्रेकायानन्तशक्तिघनेश्वरपरानुरक्तिलक्षणा **ईश्वरानन्यभक्ति**र्द्वारमपेक्ष्यते ।। अत एव चेहैश्वर्य्यविद्यायां ज्ञानविज्ञानपूर्वकोपासनालक्षणाया **ईश्वरानन्यभक्तेः** शिक्षा विशिष्यादिश्यते। अवरपराव्ययतादात्म्यनिबन्धनसर्वकर्म्माबन्धनत्वसिद्धिरूपं **नैष्कर्म्य**मैश्वर्य्यबुद्धियोगसिद्धिलक्षणं विद्यात् ।।३।।

(४) अथ-**अभिनिवेश**लक्षणक्लेशजनितशोकसमुत्थानप्रतिबन्धहेतु**र्धर्म्मबुद्धियोगः।** तदुपायविज्ञानं **धर्म्मविद्या।** तस्याश्च धर्मविद्याया **निवृत्तं कर्म्म** रहस्यम्।

**"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" ।। (ईशो०)**
इति श्रुत्यादेशात्।

**"न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति" ।।** इति स्मृत्युपदेशाच्च कर्मकरणावश्यकत्वे स्थिते ज्ञानपूर्वक-कर्मजनितानां **भावनावासना**रूपाणां शुभाशुभसंस्काराणा**मभिनिवेश**संज्ञकानामावरकत्वेनाविद्याबुद्धिविशेषतया तस्मिन्नन्तराये सति विद्याबुद्धेरात्मविद्यायां संप्रयोगो न संभवति। तस्मादव्यय-विद्यायामञ्जसा विद्याबुद्धिप्रवेशाय **निवृत्तं कर्म** द्वारमपेक्ष्यते। "प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम्" इति धर्म्माचार्य्य-मनूक्तयोः कर्मणोर्मध्ये प्रवृत्तकर्मणां बन्धनात्मकत्वेनाभिनिवेशोत्पादकत्वेऽपि प्रवृत्तकर्म्मपरित्यागपूर्वकं कृतानां निवृत्तकर्मणामबन्धकत्वात्।

**"कुर्वन्नेवेह कर्माणि" "न करोति न लिप्यते"**—इति सिद्धान्ताच्च निवृत्तकर्मणा अभिनिवेशानुत्पत्तौ आत्मविद्या—बुद्धिविद्यासंयोगप्रतिबन्धकान्तरायानुपस्थानात्। अत एवेह धर्मविद्यायां प्रवृत्तकर्म्मनिवृत्त-कर्मविवेकज्ञानसिद्ध्यर्थं नानाविधा गुणकर्मपरीक्षा विधीयन्ते। तथा चेहा**भिनिवेश**लक्षणाविद्याबुद्धि-विनाशादा**त्मप्रसादो** धर्म्मबुद्धियोगसिद्धिलक्षणमिति विद्यात् ।।४।। तदित्थं बुद्धियोगचतुष्टयं भवति।।

## विद्याचतुष्टयी

सेयं विद्याचतुष्टयी महाभारतयुद्धकालादप्यतिप्राचीना पुरा देवयुगे भिन्ने भिन्ने विदुषां समाजे पृथक्त्वेन प्रचरति स्म। तथा हि—

(१)—प्रथमा तावद् वैवस्वतमनुवंशजातानां **राजर्षीणां** कुले विशिष्य प्रचरितासीत्। **राजर्षय** एव चैतां वैराग्यविद्यां पुरात्वे विशिष्यातिष्ठन्ते स्म। तस्मादियं **राजर्षिविद्या** नाम। **अथ योगशास्त्रे त्वेष बुद्धियोगो नाम योगो निष्ठीयते—इति भाव्यम्**॥१॥

(२)—अथ द्वितीया कपिलादिसिद्धवंशजातानां ज्ञानयोगाभिमानिनां कुले भूयसा संप्रथितासीत्। सिद्धा एव चैतां कर्म्मसंन्यासलक्षणां सांख्यापरपर्य्यायां **ज्ञानयोगविद्या**मातिष्ठन्ते स्म। तस्मादियं **सिद्धविद्या** नाम॥ अथ योगशास्त्रे पुनरयं ज्ञानयोगो नाम योगो निष्ठीयते॥२॥

(३)—अथ तृतीया पुनरनृषीणामेव राज्ञामीश्वरोपासनाभिमानिनां निकाये समधिकं प्रचारमागतासीत्। राजन्या एव च पुरात्वे विशेषतस्ता**मैश्वर्यविद्या**मातिष्ठन्ते स्म। तस्मादियं **राजविद्या** नाम॥ अथ योगशास्त्रे पुनरयमुपासनायोगो वा भक्तियोगो वा नाम्ना योगो निष्ठीयते॥३॥

(४)—अथ चतुर्थी तु ब्राह्मणानां कर्म्मयोगाभिमानिनामृषीणां धर्म्मेणैव सर्वार्थसिद्धिं परिपश्यतां समाजे प्रसिद्धासीत्। ब्राह्मणा एव च ऋषयः पुरात्वे तामेतां **धर्मविद्या**मातिष्ठन्ते स्म। तस्मादिय**मार्षविद्या** नाम॥ अथ योगशास्त्रे पुनरयं कर्म्मयोगो नाम योगो निष्ठीयते॥४॥

---

## (श्रेष्ठा विद्या)

तत्र तावदियं **राजर्षिविद्यानाम्नी वैराग्यविद्या** सर्वाभ्योऽप्यन्याभ्यो ज्येष्ठा भवति, श्रेष्ठा च। अतिप्राचीने देवयुगे देवकुलजातेन विवस्वता प्रचारितत्वादतिप्राचीनत्वात्। राजर्षीणां मूलपुरुषाय तस्मै विवस्वते भगवतैव सर्वतः पूर्वमुपदिष्टतया तस्या भगवदुपज्ञत्वाच्च। अपि च उत्तरासु तिसृषु विद्यासु भगवतोऽनुमतिमात्रं न्यूनाधिकं दृश्यते। प्रथमा तु भगवतैव सर्वतः पूर्वं विवस्वते मनोः पित्रे समुपदिष्टासीदिति भगवतः स्वमतमेवेदं भवति।

**"ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः॥३।३१॥**
**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।**
**सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः॥"३।३२॥**

इत्येवं स्वमतत्वाभिमानात्। तस्मात् सर्वापेक्षयैतस्याः श्रेष्ठत्वमुपपद्यते। अत एव चेयं **राजर्षिविद्या भगवद्विद्या** चाख्यायते **सनातनविद्या** च। एतद्वैपरीत्येन तु द्वितीयस्यां **सिद्धविद्याया**मत्यल्पा भगवतोऽनुमतिर्विज्ञायते—

**"यततामपि सिद्धानां कश्चिन् मां वेत्ति तत्त्वतः"** इत्येवं तत्र स्वानभिरुचेः स्पष्टं प्रदर्शितत्वात्॥

अथैतासां तिसृणामुत्तरविद्यानामतिप्राचीनत्वेऽपि पूर्वकाले तास्वासन्नेव केचिदनुपादेया अप्यंशाः। अवश्यं च तत्तदनुपादेयांशपरित्यागपूर्वकं तासामुपादेयत्वमादेष्टुमेतस्यां गीतायां तदुल्लेखपूर्वकं भगवतैतास्तिस्रो विद्याः स्वाभिमतोपादेयांशानुसारेण व्याख्याता इति विज्ञेयम्। तथा च तासां तत्तदनुपादेयांशान् परित्यज्य यावदिह गीतायामुपात्तं तत्रावश्यं भगवतः पूर्णा संमतिरस्तीति कृत्वा ता अप्येतास्तिस्रो विद्या अवश्यमुपादेयाः सन्तीति सुनिभृतं प्रत्येतव्यम्॥

---

## (तालिका)

तत्र चैतासु भगवद्गीताप्रदर्शितासु चतुर्विधबुद्धियोगविद्यासु शास्त्रे **विद्याः—विद्याया-मुपनिषदः—उपनिषदि चोपदेशाः**—इत्येवं प्रकरणविभागा द्रष्टव्याः। तथा च गीताशास्त्रे **चतस्रो विद्याः, चतुर्विंशतिरुपनिषदः, षष्टिशतं चोपदेशाः** सन्तीति विज्ञेयम्। भगवतैव ताः सर्वा उपनिषदो
(४) — (२४) — (१६०)
विभज्योपदिष्टाः सन्तीति कृत्वा शास्त्रप्रकरणान्ते—"**भगवद्गीतासूपनिषत्सु**"—इत्येवं व्यपदेशा दृश्यन्ते।

अथ गीतायामष्टौ प्रकरणविभागा भवन्ति। तेषु श्लोकैर्विभक्तेषु **प्रकरणेषु** भगवद्गीतानामुप-निषदां तदन्तःसंनिविष्टानामुपदेशानां च तालिका यथा—

### (गीतासप्तशती—प्रकरणतालिका)

| | ८ प्रकरणानि | विद्याया-मुपनिषदः | उपनिषत्सूपदेशाः | श्लोकाः | |
|---|---|---|---|---|---|
| १<br>२ | ऐतिहासिकसन्दर्भे<br>चातुर्विद्यापक्रमे | ०<br>१ | ०<br>२ | ५९<br>५ | ६४ |
| ३ | रागद्वेषक्लेशनिर्वर्तिकायां वैराग्यबुद्धि-योगलक्षणायां राजर्षिविद्यायाम्। | ८ | ५०(७।७।७।३।३।५।९।९) | २१६ | ६१४ |
| ४ | मोहक्लेशनिर्वर्तिकायां ज्ञानबुद्धियोग-लक्षणायां सिद्धविद्यायाम्। | २ | १९(१०।९) | ५८ | |
| ५ | अस्मिताक्लेशनिर्वर्तिकायामैश्वर्यबुद्धि-योगलक्षणायां राजविद्यायाम्। | ३ | ३२(११।१५।६) | १५१ | |
| ६ | अभिनिवेशक्लेशनिर्वर्तिकायां धर्म्मबुद्धि-योगलक्षणायामार्षविद्यायाम्। | ७ | ४९(९।५।७।४।२०।२।२) | १८९ | |
| ७ | चातुर्विद्योपसंहारे | ३ | ८(४।२।२) | १७ अ० श्लो० १८–(५७–७३) | |
| ८ | ऐतिहासिकसंदर्भे | × | × | ५ अ० श्लो० १८–(७४–७८) | |
| | | (२४) | (१६०) | (७००) | |

## तत्र तावद् वैज्ञानिकोपनिषदः पृथक्कृत्य संगृह्यन्ते

### (उपनिषदां तालिका)

विद्याचतुष्टयी गीता तत्रोपनिषदः स्मृताः ॥
एकाऽष्टौ द्वे च–तिस्रश्च–सप्त–तिस्र–इति क्रमात् ॥०॥
१ — ८–२ — ३ — ७ — ३

ता एताश्चतुर्विंशतिरुपनिषदः पृथक्कृत्योपपादनीयाः। तद् यथा—

***ऐतिहासिकसंदर्भे तावदुपनिषदो न सन्ति।**

## १. अथ चातुर्विद्योपक्रमे तावदेका उपनिषत, द्वावुपदेशौ (२)

१ उत्थानिका (लोकवृत्तोपनिषत्)
[ विश्वप्रकृतिसिद्धशोकसमुत्थान-प्रसङ्गोदाहरणरूपो बन्धुयुद्धप्रसङ्गः ]

## २. अथ राजर्षिविद्यायाम् अष्टौ उपनिषदः, पञ्चाशदुपदेशाः (५०)

१—लोकप्रसिद्धयोः सांख्ययोगनिष्ठयोर्ज्ञानयोगिनां सांख्यनिष्ठायां तावदनुशोकानौचित्यम् ।
[कर्म्मसंन्यासलक्षणसांख्यनिष्ठायां ज्ञानयोगपक्षेऽपि कर्म्मत्यागानौचित्यम् ] [ सप्तोपदेशी ७]
२—बुद्धियोगिनामपि कर्म्मफलकामासक्तिपरित्यागौचित्यम् ।
[ योगापरपर्य्याय-कर्म्मयोगपक्षे कर्म्मत्यागानौचित्यम् ] [ सप्तोपदेशी ७ ]
३—बुद्धियोगिनः कर्म्मणामबन्धनत्वात् परित्यागानौचित्यम् ।
[ कर्म्मसंन्यासाभ्युपगमपक्षेऽपि नित्यकर्म्मत्यागानौचित्यम् ] [ सप्तोपदेशी ७ ]
४—बुद्धियोगप्रतिबन्धकदोषपरित्यागौचित्यम् ।
[ कर्म्मारम्भाभ्युपगमपक्षेऽपि बुद्धियोगविरोधिकर्म्मत्यागौचित्यम् ] [ त्र्युपदेशी ३ ]
५—बुद्धियोगस्य भगवन्मतसिद्धसनातनत्वम् । [ त्र्युपदेशी ३ ]
६—बुद्धियोगाविरोधिकर्म्मयोग-ज्ञानयोगोभयनिष्ठोपादेयत्वम् । [ पञ्चोपदेशी ५ ]
७—बुद्धियोगस्य कामासक्तिसंन्यासोपलक्षितकर्म्मारम्भलक्षणत्वात् कर्म्मयोग-ज्ञानयोगोभयात्मकत्वम् । [ नवोपदेशी—९ ]
८—बुद्धियोगसाधनकर्म्मयोगोपादेयत्वम् [ नवोपदेशी—९ ]

---

## अथ सिद्धविद्यायाम् द्वे उपनिषदौ, ऊनविंशतिरुपदेशाः । (१९)

१—प्रकृतिपुरुषयोर्विवेकज्ञानम् । [ दशोपदेशी—१० ]
२—ब्रह्मकर्म्मणी[२], चतुरधिकरणम्[४], अहोरात्रौ[२], सर्गप्रलयौ[२], भक्तियोगः[१], आत्म[१]गतिरिति द्वादश विज्ञानानि । [ नवोपदेशी—९ ]

---

## अथ राजविद्यायाम् तिस्र उपनिषदः, द्वात्रिंशदुपदेशाः । (३२)

१—ईश्वरस्वरूपज्ञानम् । [ एकादशोपदेशी—११ ]
२—ईश्वरीय-योगविभूतिलक्षणविज्ञानद्वयम् । [ पञ्चदशोपदेशी—१५ ]
३—ईश्वरोपासना । [ षडुपदेशी—६ ]

## अथ आर्षविद्यायाम् सप्त उपनिषदः, ऊनपञ्चाशदुपदेशाः (४९)

१—प्रकृति–पुरुषौ[२], क्षेत्र–क्षेत्रज्ञौ[२], ज्ञान–ज्ञेयौ[२]—इति षड्विज्ञानोपनिषत् । [ नवोपदेशी ९ ]
२—सत्त्वरजस्तमोलक्षणत्रैगुण्योपनिषत् । [ पञ्चोपदेशी ५ ]
३—अश्वत्थोपनिषत् । [ सप्तोपदेशी ७ ]
४—दैवासुरसंपत्तियुक्तभूतसर्गोपनिषत् । [चतुरुपदेशी ४ ]
५—गुणकर्म्मप्रचयोपनिषत् । [ विंशत्युपदेशी २० ]
　　६ गु० । १४ कर्म० ।
६—अत्याज्यकर्म्मोपनिषत् ॥ [ द्व्युपदेशी २ ]

७—अनावरणकर्म्मोपनिषत्, सैव च ब्रह्मभूतविदेहोपनिषत् [द्व्युपदेशी २]

---

## अथ चातुर्विद्योपसंहारे तिस्र उपनिषदः, अष्टोपदेशाः—[८]

१—चातुर्विद्यसारोद्धारः। [चतुरुपदेशी ४]
२—उद्धारोद्धारः। [द्व्युपदेशी २]
३—गीताफलश्रुतिः। [द्व्युपदेशी २]

---

इति क्रमेण गीतायां चातुर्विद्यविभागतः।
विद्योपनिषदो भिन्नाश्चतुर्विंशतिधेरिताः ॥१॥
आसां विशिष्य व्याख्यानमुत्तरत्र भविष्यति।
काण्डे तृतीये गीताया हृदये तत्र दृश्यताम् ॥२॥

---

### (उपदेशतालिका)

अव्ययपुरुषलक्षणे जीवात्मनि चतुर्धा संभवतां बुद्धियोगानां चतुर्विधा विद्या उपदिश्यन्ते, ता एताश्चतस्रो विद्या इदं भगवद्गीता नाम शास्त्रम्। तासु च विद्यासु याश्चतुर्विंशतिरुपनिषदो विज्ञायन्ते, तत्र षष्टिशतमुपदेशा भवन्ति। तेषामत्र तालिका प्रदर्श्यते—

(१६०)

२ ७ ७ ७ ३ ३ ५ ६ ६ १० ६ ११ १५ ६ ६ ५
रथी साथ बली मेधा धनो धाप्यश्यते धमः।

७ ४ २० २ २ ४ १ ३
थी भू न्ना खर भूपाला उपदेशाः क्रमादिह ॥१॥

---

*ऐतिहासिकसंदभ तावन्नोपदेशाः सन्ति।

---

## (१) अथ चातुर्विद्योपक्रमे त्वेकस्यां लोकवृत्तोपनिषदि द्वौ उपदेशौ भवतः।

(१) संग्रामोपलक्षणविधया प्राकृतिकशोकसमुत्थानप्रदर्शनम्।
(२) स्वयंसिद्धशोकव्युत्थानौपयिक-चतुर्विधबुद्धियोगविद्योपदेशोपक्रमः।

---

## (१) अथ भगवद्विद्यायां ज्ञानयोगिनोऽनुशोकानौचित्योपनिषदि-सप्त उपदेशाः।

(१) सर्वविधकर्म्मातीत-नित्यशुद्धबुद्धमुक्तासङ्गस्याव्ययात्मनः शाश्वतिकतया शरीरपरिग्रह-परित्यागयोः प्रवाहनित्यत्वादेकस्यैव तस्यात्मनोऽनेकदेहधारित्वस्वाभाव्यादनुशोकानौचित्यम् ॥१॥

(२) सति शरीरपरिग्रहे प्रज्ञामात्रा-प्राणमात्रा-भूतमात्रासंसर्गजनितस्य सुखदुःखादिप्रत्ययस्य नाप्राप्तत्वादौपसर्गिकत्वेनोपेक्ष्यत्वाच्चानुशोकानौचित्यम् । तथा च दीर्घकालादरनैरन्तर्य्यकृतादनुशोकोपेक्षणादनुशोकानुत्पत्तिस्वभावे सिद्धे सुखदुःख-द्वन्द्वसमत्वानुभाविनां निर्द्वन्द्वानां भूतात्मनामव्ययात्मन्यविद्यायाः प्रसक्तिर्नास्तीत्यमृतत्वसंपत्तिः ।।२।।

(३) देहभृत्यव्ययात्मनि देहसंबन्धेन सत्यपि सदसद्द्वन्द्वे असतः शरीरादेः कार्य्यस्य सत्त्वम्, सतस्तु कारणस्यात्मनोऽसत्त्वमनुपपन्नमिति विज्ञानसिद्धान्तादस्य विकुर्वाणविनश्वरशरीरयोगिनोऽप्यव्ययात्मनो नित्यनिर्विकारत्वादविनाशित्वाच्चानुशोकानौचित्यम् ।।३।।

(४) विनश्वरशरीरयोगिनोऽस्याव्ययस्यागन्तुकशरीरसापेक्षं जन्ममृत्युद्वन्द्वसाहित्येऽपि स्वरूपतो जन्ममृत्युद्वन्द्वराहित्यादात्महननासंभवादनुशोकानौचित्यम् । अपि चैतस्मिन्नव्यये नित्ययुक्तस्य प्रकृतिभूतस्य महतोऽक्षरात्मनो मूर्तियोनित्वस्वाभाव्यात् शरीरविधरणपरित्यागलक्षणस्य जन्ममरणद्वन्द्वस्य पौनःपुनिकत्वनियमादनुशोकानौचित्यम् ।।४।।

(५) अपि चैतस्याव्ययात्मनः पञ्चभूतगुणाननुस्पृष्टत्वेन विनाशासंभवादनुशोकानौचित्यम् ।।५।।

(६) जन्ममरणवति भोक्तरि कर्म्मात्मनि जन्ममरणद्वन्द्वस्य प्रवाहनित्यत्वादपरिहार्य्यत्वाच्चानुशोकानौचित्यम् ।।६।।

(७) नित्यानित्ययोरसङ्गसङ्गिनोरात्मशरीरयोः संबन्धस्यानिर्वचनीयत्वादाश्चर्य्यमयत्वेऽप्यात्मावध्यत्वसिद्धान्तादनुशोकानौचित्यम् ।।७।।

---

## (२) अथ बुद्धियोगिनः कर्म्मफलकामासक्तिपरित्यागौचित्योपनिषदि सप्त उपदेशाः ।

१—बुद्धियोगाविरुद्धज्ञानयोगोपदेशानन्तरं विवक्षितस्य व्यवसायबुद्धिसमुच्चितकर्म्मयोगलक्षणस्य बुद्धियोगस्य प्रशंसा ।।१।।

२—बुद्धियोगपरिपन्थिनस्तु कर्म्मयोगस्य वैदिकस्यापि व्यवसायबुद्धिव्यतिरेकादनन्तशाखाविभक्तस्यैहिकामुष्मिकफलभोगौपयिकस्य त्रैगुण्यविषयप्रवृत्तिलक्षणतया कामाकुलत्वाद् दुःखानुविधायित्वम्, सान्तसातिशयफलत्वात् तुच्छत्वं च ।।२।।

३—कर्म्मफलवासनाया आसक्तिहेतुतया बन्धकत्वाद् सकामकर्म्मयोगस्य दुःखानुविधायित्वम् ।। कर्म्मापरित्यागफलवासनापरित्यागाभ्यामुपलक्षितस्यानासक्तिलक्षणस्य कर्म्मयोगस्य बुद्धियोगसमर्थकतया दुःखासंभिन्ननित्यनिरतिशयफलौपयिकत्वाच्छ्रेयस्त्वम् ।।३।।

४—स्थितप्रज्ञतालक्षणाया मोहव्यतितीर्णाया बुद्धेर्बुद्धियोगसिद्ध्युपायत्वम् ।। अज्ञानावृतज्ञान—जनिताया उत्थाप्याकाङ्क्षाया मनसि निर्वेदस्य बुद्धियोगसिद्ध्युपायत्वम् ।।

५—वैराग्यलक्षणबुद्धियोगस्वरूपसंपत्तिरूपायाः स्थितप्रज्ञताया लक्षणोपदेशः ।।५।।

६—विषयानुध्यानजनिताया वासनाया आसक्तिहेतुत्वाद् बुद्धियोगप्रतिबन्धकत्वमस्तीति बुद्धियोगस्वरूपव्यापत्तिरूपाया आसक्तेर्लक्षणोपदेशः ।।६।।

७—रागद्वेषशून्यैरिन्द्रियैर्विषयग्रहणमासक्तिहेतुर्न भवतीति बुद्ध्यावरणवासनानुदयाद् बुद्धिप्रसादे बुद्धियोगसिद्धिः । बुद्धियोगस्य कषायानुदयान्निर्म्मलबुद्धिरूपतया ब्रह्मस्थितिरूपत्वम् ।।७।।

---

## (३) अथ बुद्धियोगिनः कर्म्मणामबन्धकत्वात् परित्यागानौचित्योपनिषदि सप्त उपदेशाः ।

१—सिद्धान्तरूपेण बुद्धियोगमतस्थापनार्थं कर्म्मयोग-कर्म्मसंन्यासयोः श्रेयस्त्वाश्रेयस्त्वपरीक्षारम्भः ॥१॥

२—नैष्कर्म्योपायत्वात्[१], कर्म्मसंन्यासवैयर्थ्यात्[२], कर्म्मपरित्यागाशक्यत्वात्[३], प्रकृतिसिद्धत्वाद्[४], अनासक्तकर्म्म[५]योगवैशेष्यात् [६]कर्म्मारम्भकर्म्मसंन्यासयोः कर्म्मारम्भस्य श्रैष्ठयात्, जीवनयात्रानिर्वाह[७]कत्वाच्च, नाप्राप्तस्य कर्म्मणोऽनिवार्य्यत्वात् कर्म्मपरित्यागानौचित्यम् ॥२॥

३—यज्ञार्थकर्म्मणामनासक्तिकृतत्वादबन्धनत्वादवश्यकर्तव्यत्वम्। तथा चैतस्य यज्ञकर्म्मणोऽवश्य—कर्तव्यत्वादबन्धनत्वाच्च परित्यागानौचित्यम् ॥३॥

४—उपेक्षाबुद्धिसहकृतकर्मणामनासक्तिकृतत्वादबन्धनत्वाददुष्टत्वम्। आत्मारामस्यात्मपरायणस्य विषयानासक्तस्य बहिर्लोकयात्रायामुपेक्षाबुद्धौ अपेक्षाबुद्धिमूलकसंस्कारोदयासंभवादबन्धनस्यात्मज्ञानौपयिकस्य कर्म्मणः परित्यागानौचित्यम् ॥४॥

५—विद्वत्पामराद्युच्चावचसर्वविधलोकस्थितिनिर्वाहो लोकसंग्रहः। लोकसंग्रहकर्तव्यतादृष्ट्या कृतस्य कर्म्मणोऽनासक्तिहेतुत्वादबन्धकत्वात् परित्यागानौचित्यम् ॥५॥

६—आत्मातिरिक्ताया आत्मप्रकृतेः कर्म्माधिष्ठानत्वमध्यवस्यता ममत्वराहित्यात्कर्म्मफलानुसन्धानराहित्यात् कर्तृत्वानभिमानाच्चात्मनः कर्म्मण्यासक्तिबन्धनमपश्यता स्वभावसिद्धसहजकर्म्मणः परित्यागानौचित्यम् ॥६॥

७—कर्म्मपरित्यागानौचित्यस्य भागवतमतत्वप्रतिज्ञानम् ॥७॥

---

## (४) अथ बुद्धियोगिनो बुद्धियोगप्रतिबन्धकदोषपरित्यागौचित्योपनिषदि त्रय उपदेशाः ।

१—इन्द्रियधर्म्मत्वादनात्मधर्म्मयोः प्रकृत्यधिष्ठानयो रागद्वेषयोरासक्तिहेतुत्वाद् बुद्धियोगपरिपन्थित्वम् ॥१॥

२—रागद्वेषात्मकयोः कामक्रोधयोरिन्द्रियमनोबुद्ध्यधिष्ठानयोर्बुद्धिद्वारा प्रत्यगात्मावरणत्वादात्मविदूषकत्वाच्चात्मनि तत्पारवश्यं भवतीत्यनिष्टकर्म्माचरणे तदात्मनः प्रवृत्तिः ॥२॥

३—इन्द्रियमनोबुद्धिनिग्रहणस्यैव कामक्रोधविजयोपायत्वादात्मनि कामक्रोधासक्तिनिवर्तकत्वम् ॥३॥

---

## (५) अथ बुद्धियोगस्य भगवन्मतसिद्धसनातनत्वोपनिषदि त्रय उपदेशाः ।

१—भगवन्मतसिद्धस्य वैराग्यौपयिकसमत्वलक्षणबुद्धियोगस्य ज्ञानयोगकर्म्मयोगाभ्यामतिप्राचीनत्वेन राजर्षिपरम्परोपदेशसिद्धत्वात् सनातनधर्म्मत्वम् ॥१॥

२—बुद्धियोगविद्योपदेष्टुः कृष्णवासुदेवस्यानेकजन्मग्राहित्वम्, अच्युतभगवत्त्वाज्जातिस्मरत्वं च ॥२॥

३—जीवाव्ययस्य परमाव्ययैकीभावे प्रतिपन्ने संसृतिकर्म्मनाशेन जन्ममृत्युबन्धविनिर्मुक्तत्वमिति सिद्धान्तादस्य कृष्णस्य साक्षात्परमाव्ययपुरुषतया पुनर्जन्मासंभवेऽपि विश्वाधिकार-संबन्धेनाधिकारिकत्वात् सति निमित्तविशेषे स्वेच्छयाऽनेकजन्मग्राहित्वम् ।। "यावदधिकार-मवस्थितिराधिकारिकाणाम्"इति वैयासिकसूत्रन्यायात् ।।३।।

---

## (६) अथ बुद्धियोगाविरोधि-कर्म्मयोग-ज्ञानयोगोपादेयतोपनिषदि पञ्च उपदेशाः ।

१—ज्ञानयोगस्य, भक्तियोगस्य, कर्म्मयोगस्य वा, अव्यक्तोपासनायास्तत्तद्देवतोपासनानां वा, सर्वविधकर्म्मणामव्ययाश्रयादेव फलसिद्धिः ।।१।।

२—अव्ययस्यात्मनस्तत्तत्कर्म्मसु निर्लिप्तत्वं विजानद्भिश्चतुर्भिर्वर्णैः स्वधर्म्मबुद्धया कृतानां स्वकर्म्मणां बन्धकत्वाभावः ।।२।।

३—क्षोभरूपस्य तमोलक्षणस्य कर्म्मणः, तथा शान्तिरूपतया प्रकाशलक्षणाया विद्यायाश्चान्योन्य-मन्तरान्तरीभावं विजानता कृतानां विद्यासमुच्चितकर्म्मणां विद्याप्रभावाद् बन्धकत्वाभावः । ज्ञानानुस्यूतस्य निवृत्तकर्मणो ज्ञानाग्निदग्धत्वात् संस्काराजनकत्वेनाबन्धनत्वम् ।।३।। इति कर्म्मयोगोपादेयता ।।

४—अबन्धकत्वेनोक्तानि यज्ञार्थककर्म्माणि उदाहरणविधया त्रयोदशविधानि प्रदर्श्यन्ते ।। ब्रह्मार्पण-यज्ञः ।।१।। दैवयज्ञः ।।२।। ब्रह्माग्नियज्ञः ।।३।। संयमाग्नियज्ञः ।।४।। इन्द्रियाग्नियज्ञः ।।५।। योगाग्नियज्ञः ।।६।। द्रव्ययज्ञः ।।७।। तपोयज्ञः ।।८।। योगयज्ञः ।।९।। स्वाध्याययज्ञः ।।१०।। ज्ञानयज्ञः ।।११।। प्राणायामयज्ञः ।।१२।। प्राणयज्ञः ।।१३।। इति ज्ञानयोगसमुच्चितकर्म्मयोगोपा-देयता ।।

५—सर्वविधयज्ञापेक्षया कर्म्मबन्धक्षयलक्षणस्य ज्ञानयज्ञस्य श्रेष्ठत्वम् ।। इति ज्ञानयज्ञोपादेयता ।।

---

## (७) अथ बुद्धियोगस्य कामासक्तिसंन्यासोपलक्षितकर्मारम्भलक्षणत्वात् कर्म्मयोगज्ञानयोगोभयात्मकत्वोपनिषदि नव उपदेशाः ।

१—पूर्वं कर्म्मपरित्यागानौचित्याख्यानेन कर्म्मयोगोपदेशादिदानीं ज्ञानयज्ञश्रेष्ठत्वाख्यानेन कर्म्म-संन्यासोपदेशात् संशये प्रश्नः ।।१।।

२—कर्म्मयोगकर्म्मसंन्यासयोः प्रत्येकस्य गुणदोषदर्शनादुभयोः समुच्चये विवक्षिते कर्म्मयोगस्यैव कामसंन्यास-फलाभिसन्धिसंन्यासासक्तिसंन्यासेभ्यः संन्यासलक्षणज्ञानयोगत्वोपपत्त्या तयोर्भि-न्नयोरप्यभिन्नत्वमास्थीयते । तथा च ज्ञानकर्म्मणोः समुच्चयादेकत्वेन भावितस्य बुद्धियोगस्य ज्ञानयोगत्वं च कर्म्मयोगत्वं चेति कृत्वा तादृशबुद्धियोगिनः प्रत्यगात्मनो लक्षणमन्वाख्यायते।।२।।

३—नित्यशुद्धबुद्धमुक्तस्वभावस्यात्मनोऽव्ययस्य सोपसर्गानुपसर्गावस्थयोः संसारनिस्तारावस्थयो-श्चैकरसत्वम् ।।३।।

४—बाह्यविषयसंयोगसुखापेक्षया आत्मारामान्तःसुखस्य नित्यशान्तैकरसत्वात् प्राशस्त्यम् ।।४।।

५—आत्मज्ञानेन सर्वकर्म्मपरिक्षयात् कर्म्मजनितसर्वद्वैतनिवर्तनाच्च ब्रह्मकैवल्यसिद्धिरित्यतस्तस्यात्म-ज्ञानिनोऽन्तरारामत्वम् ।। निवृत्तरागद्वेषाणां विजितात्मनामन्तर्ज्योतिष्ट्वादन्तरारामत्वम् ।।५।।

६—परमशान्त्युपायभूताया आत्मज्ञानसिद्धेरुपायभूतायां योगाभ्यासप्रक्रियायां निष्णातस्य सर्वदुःखोपशमलक्षणशान्तिसिद्धिः ॥६॥

७—सर्वविधकर्म्मैकान्तपरित्यागस्यासंभवेन नैष्कर्म्यज्ञानयोगस्याशक्योदयत्वात्कर्मयोग एवोपादेयो न ज्ञानयोग इत्येके ॥ कर्म्मयोगस्य रजस्तमोगुणयोगेन बन्धनहेतुत्वात् कर्म्मसंन्यासलक्षणो ज्ञानयोग एवोपादेयो न कर्म्मयोग इत्यपरे ॥ इत्थं विरुद्धद्वैविध्ये कर्म्मफलाभिसन्धिसंन्यासेन संन्यासलक्षणज्ञानयोगव्यामिश्रितो निष्कामनिरासक्तिकृतकर्म्मयोगलक्षणो बुद्धियोग एवोपादेय इति सिद्धान्तः ॥७॥

८—ज्ञानयोगेनात्मविजयस्य परमपुरुषार्थत्वादजितात्मना कृतस्य कामसंकल्पमयस्य कर्म्मयोगस्य दुःखानुविधायित्वम् ॥८॥

९—कर्म्मयोगेन कर्म्मनिष्ठस्यापि ज्ञानयोगेन जितात्मनः सर्वत्र समबुद्धित्वमुदेतीति समत्वलक्षणबुद्धियोगोदयौपयिकत्वात् तस्य समबुद्धित्वस्य प्राशस्त्यम् ॥९॥

---

## (८) अथ बुद्धियोगसाधनकर्म्मयोगोपादेयत्वोपनिषदि नव उपदेशाः ।

१—बुद्धियोगसिद्ध्युपायभूतं योगाभ्याससाधनम् ॥१॥

२—योगाभ्याससाधने साधकबाधकौ ॥२॥

३—बुद्धियोगसिद्धिलक्षणम् ॥३॥

४—बुद्धियोगस्वरूपलक्षणम् ॥४॥

५—बुद्धियोगसिद्धये योगाभ्यासानुष्ठानक्रमः ॥५॥

६—बुद्धियोगसाधने समतानुध्यानाभ्यासक्रमः ॥६॥

७—बुद्धियोगसिद्ध्यौपयिकमनःस्थिरतोपाये प्रश्नसमाधाने ॥७॥

८—दैवाद् योगभ्रष्टस्योदर्काख्यानम् ॥८॥

९—कर्म्मयोगि-तपोयोगि-ज्ञानयोगिभ्यो बुद्धियोगिनोऽभ्यर्हितत्वम् ।
बुद्धियोगिनोऽपि सामान्यभावुकापेक्षया श्रद्धावतः श्रेष्ठत्वम् ॥९॥

---

## (९) प्रकृतिपुरुषविवेकज्ञानोपनिषदि दशोपदेशाः

१—योगविशुद्धेनान्तःकरणेन सर्वजगदाधारस्यैकस्याव्ययस्य साक्षात्काराय ज्ञानविज्ञानोपदेशोपक्रमः ॥१॥

२—पुरुषस्याव्ययस्य परापरभेदात् प्रकृतिद्वैविध्यम् ॥२॥

३—प्रकृतिविशिष्टस्याव्ययपुरुषस्यैतदशेषजगद्भावभावित्वम् ॥३॥

४—एकस्यैवाव्ययपुरुषस्य परापरप्रकृतिवशाद् विभिन्नरूपत्वे पञ्चदशोदाहरणानि ॥४॥

५—पुरुषप्रकृतिभूतस्य महतो गुणत्रयसमष्टिरूपतया गुणत्रयभेदात् त्रिधा भिन्नानां जगद्भावानामव्ययप्रकृतिसिद्धत्वादव्ययनिष्ठत्वम् ॥५॥

६—गुणत्रयव्यतिरिक्तस्य गुणत्रयालम्बनस्यापरिणामिनो विशुद्धस्याव्ययपुरुषस्य त्रैगुण्यात्मकमायाप्रच्छन्नत्वात् तादृशगुणत्रयात्मकमायाप्रत्यन्तरितदृष्टिभिरासुरप्रकृतिभिर्दुष्कृतिभिरभास्यत्वम् । त्रैगुण्यात्मकमायावृत्तिप्राबल्येन ज्ञानसंवरणाद् ज्ञानमालिन्याद्वा तदव्ययस्या-

त्मनोऽप्रतिपत्तावपि तदव्ययार्पितमनोबुद्धचभ्यासप्राबल्येन ज्ञानविकासाद् ज्ञानवैमल्याद्वा तदव्ययात्मप्रकाशसंभवः ॥६॥

७—अस्याव्ययपुरुषस्याराधनायाम्—आर्त—धनार्थि—जिज्ञासु—ज्ञानिनां चतुर्णां सुकृतिनां निसर्गतः प्रवृत्तिमत्त्वम्। तेषु ज्ञानिनां श्रेष्ठतमत्वम्। ज्ञानात्मकत्वेनैवाव्ययस्य निर्द्धारितत्वाज् ज्ञानिनामव्ययसाक्षात्कारे संनिकर्षेण सौलभ्यात् ॥७॥

८—महत्यव्ययचिदाभासस्य सत्त्वगुणतया सात्त्विकानां प्रतिबिम्बिताव्ययचिन्मयप्राणवतीष्वव्ययावलम्बितक्षराक्षरात्मिकासु विभिन्नतत्तद्देवतासूपासकानां तत्तद्देवताद्वारा परम्परया तदव्ययपुरुषप्रपत्तावपि साक्षादव्ययप्रपत्त्यपेक्षया मन्दफलावगाहित्वम् ॥८॥

९—योगमायापहृतज्ञानतया साक्षादव्ययं पुरुषमनवगाहमानानामबुद्धीनामक्षराव्ययालम्बितक्षराक्षरात्मकदेवतामात्रोपासनाप्रवणत्वम् ॥९॥

१०—रागद्वेषद्वन्द्वमोहेन संमोहं गतानामव्ययाक्षरद्वन्द्वाविवेकात् केवलमेकमक्षरमेव प्रतिपद्यमानानां भूतभविष्यद्वर्तमानसर्वविधज्ञानजनकैतदव्ययपुरुषप्रतिपत्तिर्नोपपद्यते ॥ पुण्यकर्म्मणां तु निष्कल्मषाणां रागद्वेषद्वन्द्वमोहापक्षयेऽव्ययात्मसाक्षात्कारसंभवात् तत्प्रभावात् त्रिकालदर्शित्वसंभवः ॥१०॥

---

## (२) ब्रह्मकर्म्मणी[२]-चतुरधिकरणम्[४]-अहोरात्रौ[२]-सर्गप्रलयौ[२]-भक्तियोगः[१]-आत्मगतिरिति द्वादशविज्ञानोपनिषदि नव उपदेशाः।

१—अव्ययोपासकस्य ज्ञानिनोऽव्ययार्पितमनोबुद्धिप्रभावादक्षरक्षरविकारेष्वेतेषु जगद्भावेषु ब्रह्मकर्म्मणोस्तदुभययोगसिद्धस्य चाधिकरणचतुष्टयस्य देहावसाने परात्मन्यवरात्मगतेश्च विज्ञानसिद्धिः। अव्ययार्पितमनोबुद्धीनां योगिनां मनोबुद्धचोर्यावदव्ययं कामचारोपपत्तेः ॥१॥

२—ब्रह्मकर्म्मणोरधिकरणचतुष्टयस्य च तावत्स्वरूपविज्ञाने प्रश्नानां संक्षिप्य समाधानानि ॥२॥

३—गतिविज्ञानसमाधानाय तु सद्योमुक्ति,क्रममुक्ति,लोकयातायातानां विज्ञानेषु क्रमशः प्रतिपादनीयेषु प्रथमं तावत् सद्योमुक्तिलक्षणपरमगतेश्चतुर्धा व्युत्पादनम् ॥ तथा हि "अन्ते मतिः सा गतिः"इति सिद्धान्तादव्ययार्पितमनोबुद्धीनां देहावसानकालेऽव्ययचिरानुभवाहितसंस्कारद्वाराऽव्ययानुगमादपुनरावृत्तिः ॥३॥

४—अपि च देहावसानकाले योगाभ्यासप्रक्रिययाऽव्ययैकाग्रसमर्पितमनसाऽनुचिन्तयतः शरीरत्यागेऽव्ययप्रतिष्ठितत्वादपुनरावृत्तिः ॥४॥

५—अपि च—योगमार्गेणाव्ययोपासिनाम्—ओमित्येकाक्षरोच्चारणपूर्वकं तदनुस्मृतिमात्रपूर्वकं वा शरीरं त्यजताम् ओमितिशब्दाक्षरोपस्थापितब्रह्माक्षरसेतुद्वाराऽव्ययपरिनिष्ठानादपुनरावृत्तिः ॥५॥

६—अपि च—अनन्यचेतसाऽहर्निशमव्ययमनुचिन्तयतां जन्ममृत्युप्रवाहप्रयोजकहृद्ग्रन्थिबन्धविनिर्मोकाद् विदेहभूतस्य देहावसानेऽव्ययसायुज्यसंपत्तेरपुनरावृत्तिः ॥६॥

७—अव्यक्तात्मक्षरपर्य्यवसायिनां सर्वेषां भूतविकाराणामात्मानुबन्धिभ्यां विद्या[२]कर्म्म[१]भ्यां पुनरावृत्त्यपुनरावृत्तिभाक्त्वं ब्रह्माहोरात्रनिबन्धनसृष्टिप्रलयभाक्त्वं च।

८—अव्यक्तात्मक्षरमात्रपर्य्यवसायिनां भूतात्मनां पुनरावर्तित्वेऽपि तदव्यक्तक्षरात्परयोरव्यक्तयोरक्षराव्यययोर्निर्विकारामृतरूपत्वात् तदनुगतानां भूतात्मनामपुनरावर्त्तितया परमा गतिः।

९—कर्म्मजनितवासनासंस्कारावच्छिन्नस्य चिदाभासरूपस्य प्रत्यगात्मनो विद्याकर्म्ममयतया तदुभयतारतम्योपपन्नाभ्यां देवयानपितृयाणसंज्ञाभ्यां शुल्ककृष्णाभ्यां मार्गाभ्यां गतिं कुर्वतो विद्यातिशय्ये क्रममुक्तिसिद्धेरपुनरावृत्तिः ॥
कर्म्मप्रावल्ये तु कर्म्ममार्गेण कृष्णेन पितृयाणेन गमनात् पुनरावृत्तिः ॥९॥

---

## (१) ईश्वरस्वरूपज्ञानोपनिषदि एकादशोपदेशाः ।

१—अव्ययसाक्षात्कारौपयिकयोः कयोश्चिज्ज्ञानविज्ञानयोः पुरातनै राजवर्गैराविष्कृतत्वात् तैरद्य यावन्निगूहितत्वाच्च गुह्यराजविद्यात्वम् ॥१॥

२—भूतग्रामैरसङ्गिनोऽप्यस्याव्ययपुरुषस्य व्यक्ताव्यक्तप्रकृतिविकारविशेषे भूतग्रामेऽभिमानित्वेनानुस्यूतत्वाद् भूतसर्जनायाक्षरनियोजकत्वाच्च सर्वभूतस्रष्टृत्वं सर्वभूताधिष्ठानत्वं सर्वभूतपरायणत्वं च प्रकृत्यैवोपपद्यन्ते ॥२॥

३—मोहाकुलितासुरप्रकृतीनां मूढानां मनुष्यशरीरस्थेऽस्मिन् सर्वभूतमहेश्वरेऽनन्तशक्तिमति अव्यये प्रतिपत्त्यभावात्तदवज्ञानाज्ज्ञानवैकल्यं चेष्टावैफल्यं नैराश्यं वैचित्त्यं चोपजायते ॥३॥

४—दैवप्रकृतिमतां तु विशुद्धान्तःकरणानां महात्मनां दैव्या प्रकृत्याऽवभासितेऽस्मिन्नव्यये क्षराक्षरविकारवैशिष्ट्येन नानात्वबुद्ध्या तदुपहितत्वेन त्वेकत्वबुद्ध्या प्रतिपत्तिसंभवाज्ज्ञानयज्ञादिभिरनेकधोपासनार्थं प्रवृत्तिः ॥४॥

५—यज्ञारम्भकाणां यज्ञैकत्ववत्, भिन्नसंबन्धानां पुरुषैकत्ववत्, वेदविभक्तीनां वेदैकत्ववत्, प्रकृतिविकाराणां प्रकृत्यैकत्वेनैकस्यैवेश्वराव्ययस्य सर्वत्रोपासना ॥५॥

६—द्वादशलक्षणत्वेनैकस्याव्ययस्योपासना ॥६॥

७—विरुद्धाविरुद्धसर्वद्वन्द्वसाधारणत्वेनैकस्यैवेश्वराव्ययस्य सर्वत्रोपासना ॥७॥

८—ऐहिकामुष्मिकोन्नतिमिच्छद्भिस्त्रैविद्यैः कर्म्मयोगिभिस्त्रिकालज्ञमीश्वरमेव कर्म्मसाक्षिणमास्थाय कृतेन यज्ञकर्म्मणा ईश्वराव्ययोपासना ॥८॥

९—अन्यभक्ताव्ययभक्तयोरन्ययाज्यव्यययाजिनोः सर्वविधसर्वोपासनानामव्ययैकपर्य्यवसायित्वेऽपि सर्वयज्ञभोक्तृतमैतदव्ययायाथार्थ्यानभिज्ञानां देवपितृभूतादियाजिनां देवपितृभूतादिमात्रस्थानावगाहित्वमुपपद्यते, न त्वेवत्वव्ययपरमधामावगाहित्वं संभाव्यते। "यथाक्रतुरत्रोपास्ते, **तथाऽमुत्र संपद्यते**"—इति श्रौतसिद्धान्तात् ॥९॥

१०—सर्वकर्म्मार्पणभक्तियोगेनाव्ययोपासनायाः कर्म्मबन्धनिवर्तकत्वम् ॥१०॥

११—निर्गुणविद्योपासकानां ज्ञानयोगिनां विशुद्धैकाव्ययानन्यभक्तिमाहात्म्यम् ॥११॥

---

## (२) ईश्वरीय—योग-विभूतिलक्षण विज्ञानद्वयोपनिषदि पञ्चदशोपदेशाः ।

१—भूताभिमानिनोऽव्ययस्य यौ विभूतियोगौ, तयोर्ज्ञानस्य यत्नसाध्यत्वं सर्वपापप्रणाशकत्वं च ॥१॥

२—अव्यययोगानुभाविता अध्यात्मं मानसाः स्वभावविशेषाः ॥२॥

३—अव्यययोगानुभाविता अधिदैवतं मानसा दिव्यभावविशेषाः ॥३॥

४—अव्ययस्य वक्ष्यमाणाया विभूतेः कथितस्य च योगस्य संवेदनफलश्रुतिः ॥४॥

५—अव्ययसाक्षात्कारौपयिकस्य बुद्धियोगस्य प्राप्तेरुपायभूता वृत्तयः ॥५॥

६—अव्ययात्मनो दिव्यविभूतिजिज्ञासया प्रश्नः ॥६॥
७—अव्ययस्य दिव्यविभूतिप्रदर्शनोदाहरणानि ॥७॥
८—अर्जुनस्याव्ययवैश्वरूप्यदर्शनाकाङ्क्षा ॥८॥
९—विश्वरूपदर्शनाय भगवतार्जुनाय योगविद्याप्रभावेण दिव्यचक्षुषः प्रदानम् ॥९॥
१०—वासुदेवशारीरकाव्यये योगविद्याप्रभावादीश्वराव्ययविश्वरूपदर्शनम् ॥१०॥
११—अर्जुनकृता ईश्वराव्ययस्तुतिः ॥११॥
१२—अर्जुनं प्रति भगवदनुग्रहवाक्यम् ॥१२॥
१३—पुनरर्जुनकृता भगवत्प्रार्थनास्तुतिः ॥१३॥
१४—पुनरर्जुनं प्रति भगवदनुग्रहवाक्यम् ॥१४॥
१५—ईश्वरवैश्वरूप्यप्रदर्शनोत्तरं पुनर्मानुषरूपप्रदर्शने अर्जुनाश्वासनार्थः कृष्णार्जुनसंवादः ॥१५॥

---

## (३) ईश्वरस्योपासनोपनिषदि षडुपदेशाः ।

१—अव्ययोपासनाऽक्षरोपासनयोर्विवेकजिज्ञासा ॥१॥
२—अक्षरोपासनापेक्षया अव्ययोपासनायाः श्रेष्ठत्वे भगवत्संमतिः ॥२॥
३—अक्षरोपासनाया अव्ययप्रापकत्वेऽपि अव्ययापेक्षया अक्षरोपासनायां क्लेशाधिक्यादवरत्वम् ॥३॥
४—अक्षरापेक्षया सर्वकर्म्मार्पणरूपेश्वराव्ययोपासनाया अनायासेनाविलम्बेन च परमपुरुषार्थप्रदायित्वाच्छ्रेयस्त्वम् ॥४॥
५—अव्ययोपासनाऽनुकल्पप्रकारचतुष्टयविकल्पेषु अभ्यास-ज्ञान-ध्यान-फलत्यागेपूत्तरोत्तरश्रेयस्त्वम् ॥५॥
६—अव्ययात्मनः परमप्रसादे हेतुभूता भक्तिप्रकाराः ॥६॥

---

## (१) प्रकृति-पुरुषौ, क्षेत्र-क्षेत्रज्ञौ, ज्ञान-ज्ञेयौ,-इति षड्विज्ञानोपनिषदि नव उपदेशाः ।

(१) प्रकृतिपुरुषयोः, क्षेत्रक्षेत्रज्ञयोः, ज्ञानज्ञेययोश्च त्रिविधयोरात्मद्वन्द्वयोः स्वरूपज्ञानार्थाः षट् प्रश्नाः ॥१॥
(२) क्षेत्रक्षेत्रज्ञयोर्भूतग्रामविज्ञानात्मनोः शरीरशारीरकयोर्विवेकलक्षणं ज्ञानम् ॥२॥
(३) अष्टपुरीलक्षणक्षेत्रनिरुक्तिः ॥३॥
(४) क्षेत्रक्षेत्रज्ञविवेकज्ञानजन्यविंशतिलक्षणज्ञाननिरुक्तिः ॥४॥
(५) सर्वाधारभूतपरब्रह्माव्ययपुरुषलक्षणज्ञेयनिरुक्तिः ॥५॥
(६) सर्वविधविकारग्रामसमुद्भावकत्रैगुण्यलक्षणप्रकृतिसंज्ञस्य कर्म्मणः, सर्वविधविकारगुणग्रामाधारभूतनिष्क्रियत्वनैर्गुण्यलक्षणपुरुषसंज्ञस्य ब्रह्मणः परस्परोपयोगाभिज्ञानम् ॥६॥
(७) मृत्युनिस्तारकपुरुषोपासनाभेदाः ॥७॥
(८) प्राणिमात्रस्य क्षेत्रक्षेत्रज्ञसंयोगोपाधिकत्वम् ॥८॥
(९) क्षेत्रस्थितस्य परमेश्वरस्य, ईश्वरस्य, परमात्मनो विज्ञानात्मनश्च क्षेत्रात् पृथक्त्वेन दर्शनमात्मसाक्षात्कारलक्षणः पुरुषार्थः ॥९॥

---

## (२) सत्त्वरजस्तमोलक्षणत्रैगुण्योपनिषदि पञ्च उपदेशाः ।

१—क्षेत्रज्ञे विशेषाधायकस्य गुणत्रयसमष्टिरूपस्य प्रकृतिभूतस्य महतो ब्रह्मणः सर्वभूतयोनित्वम् ॥१॥
२—गुणत्रयस्वरूपनिरूपणम् ॥२॥
३—गुणातीतस्य विदेहात्मनो लक्षणम् ॥३॥
४—जीवाव्ययकैवल्योपासनया ईश्वराव्ययकैवल्यसायुज्यसिद्धौ सर्वगुणात्ययाद् गुणातीतत्वसिद्धिः ।
५—सृष्टम्, प्रविष्टम्, प्रविविक्तमितीत्थं ब्रह्मत्रैविध्ये गुणत्रयातीतस्येश्वराव्ययस्य सर्वजीवसम्बन्धिनिर्विशेषपरात्परपुरुषत्रयसाधारणप्रतिष्ठात्वम् ॥५॥

---

## (३) अश्वत्थोपनिषदि सप्तोपदेशाः ।

१—ब्रह्माश्वत्थ-कर्म्माश्वत्थभेदादश्वत्थद्वैविध्येऽपि ब्रह्मकर्म्मणोरपृथक्त्वेनाश्वत्थयोरपृथक्त्वादेकस्य कर्म्माश्वत्थस्यैव त्रैगुण्योपपन्नकर्म्मप्रपञ्चमयवैश्वरूप्यस्याद्धोपलभ्यमानतया तं निरस्य तदालम्बनभूते हेयप्रत्यनीके जगदीश्वरनाम्नि परमाव्यये ब्रह्माश्वत्थेऽभिनिवेशायोपदेशः ॥१॥
२—गुणकर्म्मप्रपञ्चोपाधिशून्यस्य विशुद्धस्य ब्रह्माश्वत्थरूपाव्ययस्य साक्षात्कारोपायः ॥२॥
३—परमाव्ययस्यैवाध्यात्मिकत्वौपाधिकजीवाव्ययत्वोपपत्तिः । प्रतिशरीरं गुणत्रयोपाधिभिन्नानां जीवाव्ययानामद्वितीयैकाश्वत्थाव्ययनानाप्रतीकमात्रत्वम्, आध्यात्मिकानुपायग्राहित्वं च ॥३॥
४—कर्म्माश्वत्थापृथग्भूतस्य ब्रह्माश्वत्थाख्यस्य परमाव्ययस्य जीवाव्ययत्वोपपत्तौ तदक्षरानुगतमहद्गुणयोगाद् भोक्तृत्वसिद्धिः ॥४॥
५—गुणत्रयोपाधिभिन्नान् नानायोन्याकारान् महद्विशेषानधितिष्ठतस्तस्यैकस्यैवाश्वत्थाव्ययस्य विभिन्ननामरूपगुणकर्म्मग्राहित्वम् ॥५॥
६—तस्यैकस्यैवाश्वत्थाव्ययस्य प्रतिजीवशरीरं भेदेनोपलब्धावपि औपाधिकभेदस्य तुच्छतया सर्वेषां जीवाव्ययानां परमाव्ययानतिरेकादैकात्म्यम् ॥६॥
७—एकस्यैवाश्वत्थाव्ययस्य प्रत्यर्थं कर्म्मभेदप्रयोजकगुणत्रयोपाधिभिन्नाभ्यां क्षराक्षराभ्यां महत्प्रकृतिरूपाभ्यां भेदोपचारोपपत्तिः ॥७॥

---

## (४) दैवासुरभूतसर्गोपनिषदि चत्वार उपदेशाः ।

१—जन्मसिद्धनैसर्गिकदैवासुरसंपत्तिनिबन्धनाः स्वभावसिद्धसहजगुणकर्म्मानुबन्धाः ॥१॥
२—दैवासुरभेदाद् द्विविधभूतसर्गे आसुरसर्गानुगतानि विद्यानिरपेक्षाणि गुणकर्म्माणि ॥२॥
३—आसुरसंपन्मूलकानां कामक्रोधलोभानां नरकद्वारत्वम् ॥३॥
४—दैवसंपन्मूलकानां विद्यासमुञ्चितगुणकर्म्मणां प्रतिपत्त्यर्थं वेदादिशास्त्रपरिशीलनादेशः ॥४॥

---

## (५) गुणप्रचयोपनिषदि षडुपदेशाः ।

**१—सर्वविधव्यवहारात्मकलोकयात्रायां दैवसंपत्त्या सत्त्वगुणस्य, आसुरसंपत्त्या तमोगुणस्य, उभयसंपत्तिसाम्याद् रजोगुणस्यानुषङ्गसंभवाद् गुणत्रयभेदभिन्नदैवासुरयोगमायालक्षणप्रकृत्यभिधाभिन्नानां भूतसर्गाणां कानिचिदुदाहरणानि। तथा च नावद्गुणत्रयनिष्ठाभेदात् श्रद्धात्रैविध्यम्॥१॥**

२

२—गुणत्रयवृत्तिभेदादाहारत्रैविध्यम् ॥२॥
३—गुणत्रयवृत्तिभेदाद् यज्ञत्रैविध्यम् ॥३॥
४—काय-वाङ्-मनोऽधिष्ठानभेदात् तपस्त्रैविध्यम् ॥४॥
५—गुणत्रयवृत्तिभेदात् तपस्त्रैविध्यम् ॥५॥
६—गुणत्रयवृत्तिभेदाद् दानत्रैविध्यम् ॥६॥

---

## (५) कर्म्मप्रचयोपनिषदि चतुर्दशोपदेशाः ।

१—प्रवृत्तकर्म्मणाम्, निवृत्तकर्म्मणाम्, काम्यकर्म्मणां वा यज्ञतपोदानानामपूर्णत्वसंभावनायां तत्पूर्त्तये **"प्रजापतिरूनातिरिक्तयोः प्रतिष्ठा"** इति वेदप्रामाण्यमातिष्ठमानेनेश्वराव्ययस्मरणरूपः—ॐ तत् सदिति ब्रह्मनिर्द्देशस्त्रिविधः कर्तव्यतयोपदिश्यते ॥१॥
२—कर्म्मसंन्यासत्यागयोर्विवेके नानामतेषु भगवत्सिद्धान्तमतानुसंस्रवः ॥२॥
३—गुणत्रयवृत्तिभेदात् त्यागभेदाः ॥३॥
४—कर्म्मयोगिनां कर्म्मात्यागदोषात् कर्म्मफलत्रैविध्यम् । कर्म्मसंन्यासिनां तु कर्म्मफलोदयाभावः ॥४॥
५—सांख्यसिद्धान्ते कर्म्मसिद्धिहेतूनां पाञ्चविध्यम् ॥५॥
६—ज्ञाता, ज्ञानम्, ज्ञेयम्-इति ज्ञानत्रिपुटी; कर्ता, करणम्, कर्म-इति कर्मत्रिपुटी; इतीत्थं षट्कस्य कर्म्मस्वरूपनियामकत्वम् ॥६॥
७—कर्म्मस्वरूपनियामकेषु ज्ञान-कर्म्म-कर्तॄणां प्रत्येकस्य गुणत्रयवृत्तिभेदात् त्रैविध्यम् ॥७॥
८—ज्ञानत्रैविध्यम् ॥८॥
९—कर्म्मत्रैविध्यम् ॥९॥
१०—कर्तृत्रैविध्यम् ॥१०॥
११—गुणत्रयवृत्तिभेदाद् बुद्धित्रैविध्यम् ॥११॥
१२—गुणत्रयवृत्तिभेदाद् धृतित्रैविध्यम् ॥१२॥
१३—गुणत्रयवृत्तिभेदात् सुखत्रैविध्यम् ॥१३॥
१४—त्रैगुण्यवृत्तीनां सर्वभावव्यापित्वेनोपसंहारः ॥१४॥

---

## (६) अथात्याज्यकर्म्मोपनिषदि द्वौ उपदेशौ ।

१—अथाधिकारसिद्धसांस्कारिकदैवासुरसंपत्तिनिबन्धनाः स्वभावसिद्धस्वीयगुणकर्म्मानुबन्धाः ॥१॥
२—दोषवतामपि स्वकर्म्मणां सहजकर्म्मणां च परित्यागप्रतिषेधः ॥२॥

---

## (७) कर्म्मानावरकत्वोपनिषदि द्वौ उपदेशौ ।

१—अनासक्तस्य फलवासनाशून्यस्य काम्यकर्म्मसंन्यासिनः कर्म्मकरणेऽपि नैष्कर्म्यसिद्धिः ॥१॥
२—नैष्कर्म्येण ब्रह्मभूतस्य विदेहावस्थां गतस्य सर्वविधकर्म्मकरणेऽपि सद्योमुक्तिसिद्ध्या परमाव्ययपदप्राप्त्यानन्दः ॥२॥

**इति धर्मलक्षणा आर्षविद्या संपूर्णा ॥**

---

## (१) गीतासारोद्धारोपनिषदि चत्वार उपदेशाः ।

(१) पूर्वाचार्य्यपरम्परासिद्धकर्म्मविद्याचतुष्टयोपदेशानन्तरमन्ते विद्याचतुष्टयनिष्कर्षे विवक्षिते प्रथमस्तावद् वैराग्य[१]बुद्धियोगविद्यानिष्कर्षसिद्धाया जीवाव्ययलक्षणस्वात्मनिर्भरताया आदेशः ॥१॥

(२) अथ आर्षविद्या[४]लक्षणचतुर्थविद्योद्धारस्वरूपो धर्म्मबुद्धियोगविद्यानिष्कर्षसिद्धायाः प्रकृतिसिद्धकर्म्मकर्तव्यताया आदेशः ॥२॥

(३) अथ सिद्धविद्या[२]लक्षणद्वितीयविद्योद्धारस्वरूपो ज्ञानबुद्धियोगविद्यानिष्कर्षसिद्धायाः स्वभावसिद्धस्वकर्म्मप्रवणताया आदेशः ॥३॥

(४) अथ राजविद्या[३]लक्षणतृतीयविद्योद्धारस्वरूपः पुनरैश्वर्य्यबुद्धियोगनिष्कर्षसिद्धाया जीवाव्ययात्मसंलग्नेश्वराव्ययलक्षणान्तरात्मप्रेरितकर्म्मनिष्ठताया आदेशः ॥४॥

---

## (२) उद्धारोद्धारोपनिषदि द्वौ उपदेशौ ।

१—अथोद्धारचतुष्टयादप्युद्धृत्येदानीं सर्वनिष्कर्षसिद्धाया राजर्षिविद्योपदिष्टाया अनन्यभक्तियोगरूपाया गूढोत्माव्ययपुरुषैकशरणागत्युपासनाया आदेशः ॥१॥

२—विद्याचतुष्टयात्मकभगवद्गीतार्थभावनाप्रवणत्वमात्मोन्नतिकृद् भवति ।
तस्मादिदं गीताविज्ञानमयोग्येभ्यो ग्रहीतुमसमर्थेभ्योऽपात्रेभ्यश्च न वक्तव्यम् ॥

---

## (३) गीताफलश्रुत्युपनिषदि द्वौ उपदेशौः ।

१—भगवद्गीताध्ययनश्रवणयोः श्रेयस्करत्वमिति फलश्रुतिः ॥

२—इतिहासप्रकरणान्तर्गतस्य विज्ञानप्रकरणस्योपसंहारप्रदर्शनम् ॥

**इति क्रमेणोपदेशा गीतोपनिषदामिमे ।**
**षष्टयग्र-शतसंख्याताः (१६०) संविभज्य प्रदर्शिताः ॥१॥**
**एषां विशिष्य व्याख्यानमुत्तरत्र करिष्यते ।**
**काण्डे तृतीये गीताया हृदये तत्र भाव्यताम् ॥२॥**
**अस्मिन् द्वितीयकाण्डे तु मूलगीता प्रदर्श्यते ।**
**उपदेशोपनिषदां संविभज्य विभागतः ॥३॥**

इत्युपोद्घातप्रकरणम् ।

---

# अथ गीताविज्ञानशास्त्रम्

## अथ सशीर्षकमूलपाठः ।

अथ चतुर्विधविद्योपदेशोपक्रमे तावत् संदर्भशुद्धचर्थमैतिहासिकाः श्लोकाः प्रदर्श्यन्ते ॥

**धृतराष्ट्र उवाच**

(१) १–धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥१॥

**सञ्जय उवाच**

२–दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥२॥
पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥३॥
३–अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
[१]युयुधानो [२]विराटश्च [३]द्रुपदश्च महारथः ॥४॥
[४]धृष्टकेतुश्चेकितानः[५] [६]काशिराजश्च वीर्यवान् ।
[७]पुरुजित्कुन्तिभोजश्च[८] शैब्यश्च[९] नरपुङ्गवः ॥५॥
युधामन्युश्च[१०] विक्रान्त उत्तमौजाश्च[११] वीर्यवान् ।
सौभद्रो[१२] द्रौपदेयाश्च[१३] सर्व एव महारथाः ॥६॥
४–अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥७॥
[१]भवान्भीष्मश्च[२] कर्णश्च[३] कृपश्च[४] समितिंजयः ।
अश्वत्थामा[५] विकर्णश्च[६] सौमदत्ति[७]स्तथैव च ॥८॥
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥९॥
५ अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥१०॥
अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्मेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥११॥
(२) १–तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥१२॥

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥१३॥
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥१४॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥१५॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥१६॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक् ॥१८॥
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥१९॥
२–अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥२०॥
हृषीकेशं तदा वाक्यमिदमाह महीपते ।

**अर्जुन उवाच**

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥२१॥
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥२२॥
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥२३॥

**संजय उवाच**

३–एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥२४॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥२५॥
(३) १–तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥२६॥
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ।
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥२७॥
कृपया परयाविष्टो विषीदन्निदमब्रवीत् ।

**अर्जुन उवाच**

२–दृष्ट्वेमं स्वजनं कृष्ण ! युयुत्सुं समुपस्थितम् ॥२८॥
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥२९॥
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥३०॥

निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयो ऽनुपश्यामि हत्वा स्वजनमाहवे ॥३१॥
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥२३॥
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥३३॥
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥३४॥
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥३५॥
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥३६॥
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥३७॥
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥३८॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥३९॥
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥४०॥
अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥४१॥
संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥४२॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥४३॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥४४॥
(१) **[अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥४५॥]**
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥४६॥

**सञ्जय उवाच**

(२) **[एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥४७॥]**

इति प्रथमोध्यायः ॥१॥

ऐतिहासिकेऽस्मिन्नध्याये—"अहो बत"—इति, "एवमुक्त्वा"—इति च श्लोकद्वयं वैज्ञानिकं विवक्ष्यते ।

# अथ चातुर्विद्योपक्रमः

## (१) उत्थानिकोपनिषद् (लोकवृत्तोपनिषद्) द्विसूत्री

**१—संग्रामोपलक्षणविधया प्राकृतिकशोकसमुत्थानप्रदर्शनम् ।**

**अर्जुन उवाच**

*अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥१।४५॥

**सञ्जय उवाच**

*एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥१।४७॥ [ १ अ० ]

---

**(सञ्जय उवाच)**

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥२।१॥

**२—प्राकृतिकशोकव्युत्थानौपयिकचतुर्विधबुद्धियोगविद्योपदेशोपक्रमः ।**

**श्रीभगवानुवाच**

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्य्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ! ॥२।२॥
क्लैब्यं मा स्म गमः पार्थ ! नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ! ॥२।३॥

इति—उत्थानिकोपनिषद् द्व्युपदेशी ।

### अत्रान्तरे सप्त श्लोका ऐतिहासिका द्रष्टव्याः

**अर्जुन उवाच**

१—कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥२।४॥

---

***'अहो बत' इति 'एवमुक्त्वा' इति च श्लोकद्वयं वैज्ञानिक गीतायाः प्रारम्भे लोकवृत्तोपनिषदः स्वरूपं प्राकृतिक शोकसमुत्थानलक्षणं द्रष्टव्यम् । तस्मात् पुनर्लिखितम् ।**

२––गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान्रुधिरप्रदिग्धान् ।।२।५।।
३––न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषाम स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ।।२।६।।
४––कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ।।२।७।।
५––न हि प्रपश्यामि ममापनुद्याद् यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ।।२।८।।

**सञ्जय उवाच**

६––एवमुक्त्वा हृषीकेशं गुडाकेशः परंतप ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ।।२।।९।।
७––तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ।।२।१०।।

**इति––ऐतिहासिकाः सप्त श्लोकाः ।** (४५+७=५२)

# १—अथ राजर्षिविद्या

अथ वैराग्यबुद्धियोगलक्षणा भगवद्विद्या उपदिश्यते ॥

## [ सनातनविद्या=भगवद्विद्या=वैराग्यविद्या ]

१—आत्मनो नित्यशुद्धबुद्धमुक्तैकान्तज्ञानमयत्वविवक्षारूपायां सांख्यानां ज्ञानयोगनिष्ठायामनुशोको व्यर्थः ॥१॥

२—आत्मनो रागद्वेषफलकामासक्तिसंवलितकाम्यकर्म्मव्यतिरिक्त—सर्वविधकर्म्मसमुच्चितज्ञानमयत्वविवक्षारूपायां बुद्धियोगनिष्ठायामनुशोको व्यर्थः ॥२॥

३—रागद्वेषादिदोषैरदूषितानां नित्यानां स्वभावसिद्धसहजकर्म्मणामबन्धनत्वात् परित्यागानौचित्यम् ॥३॥

४—बुद्धियोगप्रतिबन्धकानामात्मशक्त्यावरकाणां रागद्वेषादिदोषदूषितकर्म्मणां परित्यागौचित्यम् ॥४॥

५—बुद्धियोगनिष्ठायाः सनातनत्वम्, भगवत्प्रथमोपदिष्टत्वम्, राजर्षिकुलप्रचरितत्वं च ॥५॥

६—बुद्धियोगाविरोधिनां कर्म्मणां परित्यागानौचित्यम् ॥६॥

७—बुद्धियोगस्य ज्ञानयोगकर्म्मयोगोभयसमुच्चितरूपत्वम् ॥७॥

८—बुद्धियोगसिद्धिहेतोः कर्म्मकलापस्योपादेयत्वम् ॥८॥

इत्येतावन्तोऽर्थाः संप्रतिपन्ना वैराग्यविद्या नाम ॥ सेयं भगवता विवस्वते प्रथमोपदिष्टा वैराग्यविद्या राजर्षिकुले सनातनकालात् प्रचरति स्म । तामिह गीतायामादौ षोड़शाधिकद्विशतमितश्लोकैरुपपादयन्ति ॥२१६॥

### (१) तत्र तावद् ज्ञानयोगिनोऽनुशोकानौचित्योपनिषत् ।

**१—अस्ति हि—देहभृत्यव्ययात्मनि जन्ममरणद्वन्द्वाभावः ।**

**श्रीभगवानुवाच**

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥२।११॥
नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥२।१२॥
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥२।१३॥

**२—अस्ति हि देहभृत्यव्ययात्मनि सुखदुःखद्वन्द्वस्य संयोगजत्वेनागमापायित्वम् । तस्मात् समदुःखसुखानुभाविनां भूतात्मनामव्ययात्मसाधर्म्यलाभादमृतत्वसंपत्तिः ।।**

मात्रास्पर्शास्तु कौन्तेय ! शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व[1]* भारत ! ।।२।१४।।

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ !
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ।।२।१५।।

**३—अस्ति हि—देहभृत्यव्ययात्मनि सदसद्द्वन्द्वे असतः शरीरादेः कार्य्यस्य सत्त्वम्, सतस्तु कारणस्यात्मनोऽसत्त्वमनुपपन्नमिति विज्ञानसिद्धान्तः—**

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोन्तस्त्वनयोस्तत्त्वदर्शिभिः ।।२।१६।।

**३—तस्मादस्य विकुर्वाणविनश्वरशरीरयोगिनोऽप्यात्मनो निर्विकारत्वादविनाशित्वाच्चानुशोकानौचित्यम् ।**

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ।।२।१७।।

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ।।२।१८।।

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ।।२।१९।।

**४—अपि चैतस्य विनश्वरशरीरयोगिनोऽप्यव्ययस्य जन्ममृत्युद्वन्द्वरहितत्वेन हननासंभवादनुशोकानौचित्यम्—**

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ।।२।२०।।

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ।।२।२१।।

**४—अपि चैतस्मिन्नव्यये—महतोऽक्षरात्मनो मूर्त्तियोनित्वस्वाभाव्याच्छरीरविधरणपरित्यागलक्षणयोर्जन्ममरणयोः पौनःपुनिकत्वनियमादनुशोकानौचित्यम् ।**

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ।।२।२२।।

---

**[1]* तांस्तितिक्षस्वेति—प्रत्यक्षं हि लोके दृश्यते—जनमरणे धनहरणे वा प्रथमक्षणे परमाघातः, परमं दुःखम् । अथ सहनक्रमेणैतत्तितिक्षावशादल्पतां गच्छत् कैश्चिदहोभिस्तद् दुःखं विलीयते । एवं सुखम् । स एष प्रकृतिसिद्धो नियमः । किन्तु एवमेवेदं सहनं यद्यभ्यासेन कृत्रिमप्रयत्नेन गृह्णीयात्, तदा तस्यैतद् दुःखं प्रत्याघातकालेऽपि नोदियाद्—अभ्यासप्राबल्यात् । स यथाभ्यासी भवति, तथैतस्य वृत्तिः संपद्यते । दुःखनिमित्ताघातो विश्वप्रकृतिनियमो (धर्म्मो) न निवर्तते । स्वप्रकृतिस्तु-अभ्यासेन, वैराग्येण च मनसः संस्कारात् संस्क्रियते । तेन दुःखं निवर्तते ।**

**५—अपि चैतस्याव्ययात्मनः पञ्चभूतगुणाननुस्पृष्टत्वेन विनाशासंभवादनुशोकानौचित्यम् ।**

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२।२३॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥२।२४॥
अव्यक्तोऽयमचिन्त्योऽयमविकार्योयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२।२५॥

**६—जन्ममरणवति भोक्तरि कर्म्मात्मनि जन्ममरणद्वन्द्वस्य प्रवाहनित्यत्वादपरिहार्य्यत्वाच्चानुशोकानौचित्यम् ।**

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महावाहो[1] नैवं शोचितुमर्हसि ॥२।२६॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि ॥२।२७॥
अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत !
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥२।२८॥

**७—नित्यानित्ययोरसङ्गसङ्गिनोः संबन्धस्यानिर्वचनीयत्वादाश्चर्य्यमयत्वेऽप्यात्मावध्यत्वसिद्धान्तादनुशोकानौचित्यम् ।**

आश्चर्य्यवत्पश्यति कश्चिदेनमाश्चर्य्यवद्वदति तथैव चान्यः ।
आश्चर्य्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥२।२९॥
देही नित्यमवध्योऽयं देहे सर्वस्य भारत !
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥२।३०॥

**इति ज्ञानयोगिनोऽनुशोकानौचित्योपनिषत् ।**

## अत्रान्तरे सप्त ऐतिहासिका नैतिकाः श्लोकाः

१—स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥२।३१॥
२—यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥२।३२॥
३—अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्त्तिं च हित्वा पापमवाप्स्यसि ॥२।३३॥
४—अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥२।४३॥
५—भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥२।३५॥

---

[1] **नैनं—इति पाठान्तरम् ।**

६––अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ।।२।३६।।
७––हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ।।२।३७।।

इति––ऐतिहासिकाः सप्त श्लोकाः । (४५+७+७= ५९)

## कर्मफलासक्तिपरित्यागोपक्रमः

**सर्वविधद्वन्द्वप्रत्ययेषु साम्यवृत्तेः श्रेयस्करत्वम् ।**

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ।।२।३८।।

# (२) अथ बुद्धियोगिनः कर्म्मफलकामासक्तिपरित्यागौचित्योपनिषत्

**१—कर्म्मसंन्यासलक्षणज्ञानयोगापेक्षया फलासक्तित्यागोपाधिकबुद्धियोगप्राशस्त्यम् ।**

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्धया युक्तो यया पार्थ कर्म्मबन्धं प्रहास्यसि ॥२।३९॥
नेहाभिक्रम*नाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्म्मस्य त्रायते महतो भयात् ॥२।४०॥
†व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ! ।
बहुशाखा ह्यनन्ताश्च बुद्धयो व्यवसायिनाम् ॥२।४१॥

**२—काम्यकर्म्मयोगस्य बुद्धिविक्षेपकत्वेन बुद्धियोगविघातकत्वादनिष्टत्वम् ।**

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ ! नान्यदस्तीति वादिनः ॥२।४२॥
कामात्मानः स्वर्गपरा जन्मकर्म्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्य्यगतिं प्रति ॥२।४३॥
भोगैश्वर्य्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥२।४४॥
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्य्योगक्षेम आत्मवान् ॥२।४५॥

---

*** उद्देश्यार्थसाधनानुकूलस्तत्पूर्त्यभिमुखश्चेष्टासंचारक्रमोऽभिक्रमः ।**
**अभ्युदयप्रतिकूला कार्य्यनिपातलक्षणा चेष्टागतिः प्रत्यवायः ।**
**आत्मन ऊर्ध्वप्रचारोऽभिक्रमः । आत्मनोऽधःपातः प्रत्यवायः ।**

**† व्यवसायात्मिकेति—संकल्पकामासक्तिदोषादूषितविशुद्धमनोऽनुग्राहिणी बुद्धिर्व्यवसायः । तत्तत्कामादिदोषविक्षिप्तमनोऽन्वाकृष्टा बुद्धिरव्यवसायः । अपि च—इन्द्रियाधिष्ठितमनःसंपरिष्वङ्गाद् मनोऽनयोगिनी व्यवच्छिन्ना बुद्धिरव्यवसायः । मनोनिरपेक्षा तु आत्मानुयोगिनी निष्कैवल्या बुद्धिर्व्यवसायः । अव्यवसायबुद्धया दिग्देशकालानवच्छिन्नोऽयमसीम आत्मा भूमा न ग्रहीतुं शक्यते-मनसः परिच्छिन्नार्थग्राहित्वात् । व्यवसायबुद्धया तु सोऽयमसीमोऽपि भूमा शून्यबिन्दुरणिमा कथंचिद् गृह्यत एव । अन्यथा तद्वयवहारासंभवापत्तेः ।**

यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ।।२।४६।।

**३—कर्म्मयोगस्य फलासक्तित्यागोपाधिकबुद्धियोगात्मकत्वेनाभ्युपपत्तौ श्रेयस्करत्वम् ।**

कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्म्मफलहेतुर्भूर्मा ते संगोस्त्वकर्म्मणि ।।२।४७।।
योगस्थः कुरु कर्म्माणि सङ्गं त्यक्त्वा धनंजय ।
सिद्धयसिद्धयोः समो भूत्वा समत्वं योग उच्यते ।।२।४८।।
दूरेण ह्यवरं कर्म्म बुद्धियोगाद्धनंजय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ।।२।४९।।
बुद्धियुक्तो जहातीह उभे सुकृत-दुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्म्मसु कौशलम् ।।२।५०।।
कर्म्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ।।२।५१।।

**४—मोहव्यतितीर्णायाः स्थितप्रज्ञताया बुद्धियोगसिद्धयुपायत्वम् ।**
**अज्ञानावृतज्ञानजनिताया उत्थाप्याकाङ्क्षाया मनसि निर्वेदस्य बुद्धियोगसिद्धयुपायत्वम् ।।**

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ।।२।५२।।
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ।।२।५३।।

**५—वैराग्यलक्षणबुद्धियोगस्वरूपसंपत्तिरूपायाः**
**स्थितप्रज्ञतायाः षड् लक्षणानि ।।**

अर्जुन उवाच

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ।।२।५४।।

श्रीभगवानुवाच

(१) **(तुष्टिमूला)**—प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थित*प्रज्ञस्तदोच्यते ।।२।५५।।

---

*** स्थितप्रज्ञस्तदोच्यते–इति—अव्ययविद्याभागे विद्याबुद्धियोगादात्मन्यविद्याविद्ययोः साम्योपपत्तिरात्मबलम् । तद् द्वन्द्वसहिष्णु । तत्र सत्यपि दुःखानुभवे ततो विह्वलत्वाभावः समतालक्षणस्थैर्य्यम् । तस्माद्विद्याविद्ययोः समत्वमात्मबलम्; आत्मबलसंयमनान्मनसि दृढता जायते । सा क्षोभप्रतिबन्धिका, ततश्च क्षोभानुदयात् स्थितप्रज्ञता संभवति । सा षोढा—तुष्टिमूला,[१] प्रेयोनासक्तिमूला,[२] श्रेयोनासक्तिमूला,[३] तृप्तिमूला,[४] अनशनतपोमूला,[५] इन्द्रियवशीकारमूला[६] चेति । इन्द्रियद्वारा मानसान्नभोगं भुक्तवतोऽपूर्णायां तृप्तौ तस्यार्द्धतृप्तस्याग्रे तृप्तिपूर्णत्वार्थमप्रयतमानस्यैच्छिको मध्ये विश्रामः सन्तोषः । तत्र भोगार्थं प्रयत्नाभावः स्थितप्रज्ञता । अथ प्रेयःश्रेयोविषयकमिष्टजनकत्वज्ञानं प्रवृत्तिनिमित्तम् । आरम्भणहेतुपञ्चकपरिग्रहः प्रवृत्तिः, सा क्षोभहेतुः । (अग्नेऽपि शेषः)**

(२) **(प्रेयोऽनासक्तिमूला)**—दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥२।५६॥

(३) **(श्रेयोऽनासक्तिमूला)**—यः सर्वत्रानभिस्नेहस्तत्तत् प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥२।५७॥

(४) **(तृप्तिमूला)**—यदा संहरते चायं कूर्म्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥२।५८॥

(५) **(अनशनतपोमूला)**—विषया विनिवर्त्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥२।५९॥

(६) **(इन्द्रियवशीकारमूला)**—यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥२।६०॥
तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥२।६१॥

**६—बुद्धियोगप्रतिबन्धकधर्म्माः ।**

ध्यायतो* विषयान्[१] पुंसः सङ्गस्तेषूपजायते[२]† ।
सङ्गात् संजायते कामः[३] कामात् [४]क्रोधोऽभिजायते ॥२।६२॥

---

**(पूर्व पृष्ठ शेषः) अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥१॥**
**शरीरवाङमनोभिर्यत् कर्म्म प्रारभते नरः ।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥२॥**

**इति पञ्चहेतुपरिग्रहः क्षोभः । प्रवृत्तावुद्योगो मानसः क्षोभः । यत्नातिशयव्यग्रता उद्योगः । उत्थिताकाङक्षालक्षणप्रवृत्तेः क्षोभत्वाभावेऽपि उत्थाप्याकाङक्षालक्षणस्योद्योगस्य क्षोभत्वं स्थितप्रज्ञताविरोधित्वम् । तदभावः स्थितप्रज्ञता । अन्नभोगेच्छापूर्त्तौ कृतकृत्यतानन्दस्तृप्तिः । इत्थं चतुर्विधा स्थितप्रज्ञता युक्तस्य सिद्धरूपा भवति । अथोत्तरे द्वे साध्यरूपे युञ्जानस्थे भवतः ॥५॥**

***ध्यायतो विषयानिति—मनसो विषयाकाराकारितत्वं वासना नाम संस्कारः । स्वजनितसंस्कारद्वारा विषये मनसो बन्धनमासक्तिः । मनसानुभवजन्यसंस्कारस्याधानेऽनुभवस्य चिरकालिकत्वं हेतुः । तच्च न संभवति-संकल्पविकल्पात्मकस्य मनसः क्षणिकपरिग्रहपरित्यागलक्षणत्वात् । तस्माद्बुद्धिसहकृतस्य मनसः संस्काराधायकत्वं वाच्यम् । सा बुद्धिरपि द्विविधा—उपेक्षाबुद्धिरपेक्षाबुद्धिश्च । मनोबुद्ध्योः सहयोगे बुद्ध्या मनोधीनत्वे-उपेक्षा । मनसो बुद्ध्यधीनत्वे त्वपेक्षा । तत्रोपेक्षाबुद्धिसहकृतस्यापि मनसः संस्काराधायकत्वं न दृश्यते । अपेक्षाबुद्धिसहकारे तु बुद्ध्या विषयग्रहणस्य चिरकालिकत्वात् सहकृतस्य मनसश्चिरकालिकत्वमुपपद्यते । तत्र बुद्धेर्विषयाकारितापरिणामाभावेऽपि मनसः संयुक्तरूपग्राहित्वस्वाभाव्याद्—विषयाकाराकारितत्वं भवतीति संस्कारो जायते । अथ यदाकाराकारितत्वं मनसः, तस्मिन् विषये बन्धो भवति, सैवासक्तिर्नाम । तथा च अविद्याबुद्धिसहकृतेन मनसा चिरकालिकं विषयानुचिन्तनमनुध्यानम् । तदासक्तिहेतुत्वादासक्तिः । प्रज्ञाने विज्ञानानुष्वङ्गोऽनुध्यानम् । अविद्यारूपयाऽपेक्षाबुद्ध्या मनोगृहीतार्थविषयकं चिरपरिग्रहणमनुध्यानम् ।**

**†सङ्गस्तेषूपजायते—इति—चिरकालिको मानसो विषयसंयोगो बन्धनात्मकः सङ्गः । मनसाकारिते विषये बहिर्धा मनसो जिघृक्षा कामः । ततः कामसिद्धिप्रतिबन्धके क्रोधः । अनुकूलसंयोगलक्षणः—**

क्रोधाद् भवति संमोहः[५] संमोहात् [६]स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् [७]बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥२।६३॥

**७—रागद्वेषजनितवासनामयकषायनाशे बुद्धिप्रसादाद्विमलबुद्धिलक्षणस्य बुद्धियोगस्य ब्राह्मस्थिति-हेतुत्वम् ।**

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा* प्रसादमधिगच्छति ॥२।६४॥
प्रसादे सर्वदुःखानां हानिरस्योपजायते
प्रसन्नचेतसो ह्याशु बुद्धिः पर्य्यवतिष्ठते ॥२।६५॥
नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥२।६६॥
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥२।६७॥
तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥२।६८॥
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥२।६९॥

---

**—सुखानुशयी संस्कारः कामः । प्रतिकूलसंयोगलक्षणो दुःखानुशयी संस्कारः क्रोधः । सङ्गात्मक-संस्कारसहयोगनित्यौ हीमौ संस्कारौ भवतः । तयोर्विरुद्धसंयोगः संमोहं जनयति । अन्योन्यप्रत्याघातात् संस्काराणामुपमर्द्दः सम्मोहः । संस्कारस्वरूपयाथार्थ्यविच्छेदात् संस्कारोपजनितं स्मृतिर्ज्ञानं विभ्रंशते । अनन्तवासनासंस्कारजनितानि भूयांसि स्मृतिज्ञानान्येव च विज्ञानबुद्धिरूपारम्भणानि भवन्ति । यावन्तो-ऽनुभवाः परिवर्द्धन्ते, तावदस्य विज्ञानं प्रतिफलितं भवति । स्मरणानां विज्ञानस्वरूपाधायकत्वात् । तथा च स्मरणनाशाद् बुद्धिभ्रंशः । ततः कर्तव्याकर्तव्यविवेकनाशात् सर्वो लोको विषीदति । तस्मादा-सक्तिः श्रेयसे नास्ति १—विषयाभिध्यानम् । २—विषयाभिषङ्गः । ३—कामः । ४—क्रोधः । ५—संमोहः । ६—स्मृतिविभ्रमः । ७—बुद्धिनाशः । ८—प्रणाशः ।**

***विधेयात्मेति—पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।**
**अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह प्रार्थयन्ते ॥१॥**
**कामान् यः कामयते मन्यमानः कामभिर्जायते तत्र तत्र ।**
**पर्य्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥२॥**
**(मुण्डकोपनिषदि)**

**योगमनारुरुक्षुरयं सर्वो लोक :—अकृतात्मा । योगारूढः कृतात्मा । आरुरुक्षुर्विधेयात्मा । विकारैकान्तनिरसनान्निर्मलीभावः प्रसादः ।**

**विज्ञानमानन्दं ब्रह्म । प्रत्यक् पराग् ब्रह्म-विद्या—सा द्वेधा—ज्ञानं च विज्ञानं च । विज्ञानविद्यया विषयानन्दः समृद्धिः । शान्तानन्दस्यानुभवो नास्ति—अनैन्द्रियकत्वात् । विषयानन्दस्यानुभवो भवति, ऐन्द्रियकत्वात् । अत एव सोऽनुभवः सुखं नाम । क्षणिकं च तत्सुखम् । ब्रह्मणि कर्म्मपृथक्त्वरूपस्या-नन्दस्य क्षणिकत्वात् । सद्यः कर्म्मावरणात् सुखानुभवो विलीयते । शान्तिः सुस्थिरा, आत्मानन्दत्वात् ।**

आपूर्य्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत् कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ।।२।७०।।
विहाय* कामान् यः सर्वान् पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ।।२।७१।।
एषा† ब्राह्मी स्थितिः पार्थ ! नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ।।२।७२।।

**इति द्वितीयाध्यायः। सेयं योगनिष्ठायामनुशोकानौचित्योपनिषत् ।**

---

*विहाय कामान् यः सर्वानिति—द्विविधा हीमे लोका भवन्ति—अन्तर्मुखा आत्मपरायणाः संयमिनः। ते ज्ञानेनात्मानं गृह्णानाः शान्तिलक्षणमानन्दं लभन्ते किन्तु नानुभवन्ति। अथ विषयपरायणा बहिर्मुखाः साधारणाः। ते ज्ञानेन विषयान् गृह्णानाः समृद्धिलक्षणमानन्दमनुभवन्ति सुखं नाम।

†एषा ब्राह्मी स्थितिरिति—ब्रह्मकर्म्मणी द्वे तत्त्वे। ब्रह्म द्विविधम्—प्रत्यक् च पराक् च। प्रत्यग्विषया विद्या ज्ञानम्। पराग्विषया तु विज्ञानं विविधत्वात्। उभयथा श्रूयते—"सत्यं ज्ञानमनन्तं ब्रह्म" "नित्यं विज्ञानमानन्दं ब्रह्मेति"। उभयं चेदं ज्ञानं विज्ञानं चानन्दहेतुः—अविनाभूतत्वात्। तथा चानन्दो द्विविधः—आत्मानन्दः, विषयानन्दश्चेति। तत्रात्मानन्दः शान्तिः। तस्यानुभवो नास्ति—अनिन्द्रियत्वात्, अनुभवस्येन्द्रियसापेक्षत्वात्। अथ विषयानन्दः समृद्धिः—तस्यानुभवः सुखम्। स क्षणिकः, कर्म्मविषये आनन्दप्रकाशप्रतिबन्धकस्य कर्म्मावरणस्य क्षणिकविघातेनात्मानन्दविषयानन्दयोरेकीभावस्य क्षणिकत्वात्, विषयावच्छिन्नानन्दस्यान्तःकरणवृत्त्यवच्छिन्नानन्देनैकीभावस्य सुखानुभवरूपत्वात्। तथा चानन्दहेतुद्वैविध्यादानन्दसापेक्ष्यवैशेष्याच्च द्विविधा विधेयात्मानो भवन्ति—समृद्धानन्दसापेक्षाः, शान्तानन्दसापेक्षाश्च—इति ।।

# (३) बुद्धियोगिनः कर्म्मपरित्यागानौचित्योपनिषत्

१—कर्म्मसंन्यास-कर्म्मारम्भलक्षणयोः सांख्ययोगयोर्योगस्यैव श्रेयस्त्वम् ।

**अर्जुन उवाच**

ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिर्जनार्दन ।
तत् किं कर्म्मणि घोरे मां नियोजयसि केशव ॥३।१॥
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥३।२॥

**श्रीभगवानुवाच**

लोके ऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन *सांख्यानां कर्म्मयोगेन योगिनाम् ॥३।३॥

२—[१]नैष्कर्म्योपायत्वात्, [२]कर्म्मसंन्यासवैयर्थ्यात्, [३]कर्म्मपरित्यागाशक्यत्वात्, [४]प्रकृतिसिद्धत्वात्, अनासक्तकर्म्मयोगवैशेष्यात्[५], कर्म्मारम्भकर्म्मसंन्यासयोः[६] कर्म्मारम्भश्रैष्ठ्यात्, [७]जीवन-निर्वाहकत्वाच्चेति सप्तधा नाप्राप्तकर्म्मणः परित्यागाशक्यत्वम् ।

न कर्म्मणामनारम्भान्नैष्कर्म्यं[१] पुरुषोऽश्नुते ।
न च संन्यस[२]नादेव सिद्धिं समधिगच्छति ॥३।४॥
न[३] हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत् ।
कार्य्यते[४]ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥३।५॥
[५]कर्म्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥३।६॥
[६]यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्म्मेन्द्रियैः कर्म्मयोगमसक्तः स विशिष्यते ॥३।७॥

---

* सांख्यानामिति—शरीराभेदेन प्रतीतेऽस्मिन्नात्मनि सतामनेकेषां पदार्थानां पृथक्त्वेन संख्यानात्, तेभ्यः संख्यातपदार्थेभ्यः पृथक्त्वेनात्मनः परिज्ञानं संख्यातः प्राप्तत्वात् सांख्यम् । बहून् संख्याय तत्रैकस्यात्मत्वेन निर्धारणं सांख्यम् । तथा चाहंत्वेन प्रतिपन्नस्य देहिनः प्रकृतिपुरुषयोर्विवेकेन ज्ञानं सांख्यम् ।

नियतं कुरु कर्म्म त्वं कर्म्म ज्यायो ह्यकर्म्मणः ।
¹शरीरयात्रापि च ते न प्रसिद्ध्येदकर्म्मणः ॥३।८॥

**३—यज्ञार्थकर्म्मणामनासक्तिकृतत्वादबन्धनत्वादवश्यकर्तव्यत्वम् । यज्ञकर्म्मणोऽवश्यकर्तव्यत्वात्परित्यागानौचित्यम् ।**

यज्ञार्थात्कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धनः ।
तदर्थं कर्म्म कौन्तेय ! मुक्तसङ्गः समाचर ॥३।९॥
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥३।१०॥
देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥३।११॥
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥३।१२॥
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्विषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥३।१३॥
अन्नाद् भवन्ति भूतानि* पर्जन्यादन्नसंभवः ।
यज्ञाद् भवति पर्जन्यो यज्ञः कर्म्मसमुद्भवः ॥३।१४॥
कर्म्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात् सर्वगतं ब्रह्म† नित्यं यज्ञे प्रतिष्ठितम् ॥३।१५॥
एवं प्रवर्तितं चक्रं नानुवर्त्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥३।१६॥

**४—उपेक्षाबुद्धिसहकृतकर्मणामनासक्तिकृतत्वादबन्धनत्वाददुष्टत्वम् । आत्मारामस्यात्मपरायणस्य विषयानासक्तस्य बहिर्लोकयात्रायामुपेक्षाबुद्धौ, अपेक्षाबुद्धिमूलकसंस्कारोदयासंभवादबन्धनस्यात्मज्ञानौपयिकस्य कर्म्मणः परित्यागानौचित्यम् ।**

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्य्यं न विद्यते ॥३।१७॥
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥३।१८॥
तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर ।
असक्तो ह्याचरन् कर्म्म परमाप्नोति पूरुषः ॥३।१९॥
कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः ।

---

*** १ अक्षराद्—ब्रह्म। २ ब्रह्मणः—कर्म्म। ३ कर्म्मणो—यज्ञः। ४ यज्ञात्—पर्जन्यः। ५ पर्जन्याद्—अन्नम्। ६ अन्नाद्—भूतानि। ७ भूतानि—इमानि सर्वाणि।**

**† ब्रह्म नित्यं यज्ञे प्रतिष्ठितमिति—अक्षरवदक्षरमयं ब्रह्म शश्वत् कर्म्माणि जनयद् यज्ञ जनयति। तस्माद् ब्रह्मेदं यज्ञे प्रतिष्ठितम् ।**

**५—विद्वत्पामराद्युच्चावचसर्वविधलोकस्थितिनिर्वाहो लोकसंग्रहः। लोकसंग्रहकर्तव्यतादृष्ट्या कृतस्य कर्म्मणोऽनासक्तिहेतुत्वादबन्धनत्वात् परित्यागानौचित्यम्।**

५—लोकसंग्रहमेवापि संपश्यन् कर्त्तुमर्हसि ॥३।२०॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥३।२१॥
न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।
नानवाप्तमवाप्तव्यं वर्त एव च कर्म्मणि ॥३।२२॥
यदि ह्यहं न वर्त्तेय जातु कर्म्मण्यतन्द्रितः।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ ! सर्वशः ॥३।२३॥
उत्सीदेयुरिमे लोका न कुर्य्यां कर्म्म चेदहम्।
संकरस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः ॥३।२४॥
सक्ताः कर्म्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्य्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥३।२५॥
न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम्।
जोषयेत् सर्वकर्म्माणि विद्वान् युक्तः समाचरन् ॥३।२६॥

**६—प्रकृतिसिद्धसहजगुणकर्म्मण्यनासक्तौ कर्तृत्वानभिमानादबन्धनत्वात्परित्यगायोग्यत्वम्।**

६—प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि* सर्वशः।
अहंकारविमूढात्मा कर्त्ताहमिति मन्यते ॥३।२७॥
तत्त्ववित्तु महाबाहो गुणकर्म्मविभागयोः।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥३।२८॥
प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्म्मसु।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥३।२९॥
मयि सर्वाणि कर्म्माणि संन्यस्याध्यात्मचेतसा।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३।३०॥

**७—कर्म्मत्यागानौचित्यस्य भगवन्मतत्वप्रतिज्ञानम्।**

७—ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः ॥३।३१॥

---

***कर्म्माणीति—वीर्य्यं विसर्ग आरम्भो यज्ञ आत्मार्थसंस्कृती।
इत्येतान्येव कर्म्माणि षड्विधानि प्रचक्षते ॥१॥
वीर्य्यं कर्म्मेति सभये (७।४।१) वाजिब्राह्मण उच्यते।
आत्मनस्तु मनःप्राणवाचामन्योन्ययोगतः ॥२॥
भूतभावोद्भवकरो विसर्गः कर्म्मसंज्ञकः।
प्रवृत्तिकर्म्म वाग्बुद्धिशरीरारम्भणं पृथक् ॥३॥
यज्ञः श्रेष्ठतमं कर्म्मेत्याम्नातं याजुषश्रुतौ।
धी-भो-गे (९।४।३) विश्वकर्म्माणि मतान्यग्निरयं चितः ॥४॥**

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥३।३२॥

*** इति आत्माश्रितसाम्ययोगः**

---

* आत्माश्रितसाम्ययोगेति—अव्ययस्यात्मनो द्वे भक्ती—विद्या च कर्म्म च। विद्यारसो ज्ञानम्, कर्म्मरसः क्रिया। अनासक्ति निष्कामं निवृत्तं कर्म्म कृतमावरणबन्धनं नाप्नोति, तेन ज्ञानं नापैति। तेन ज्ञानकर्म्मणोः साम्ययोगः; निष्ठासाम्ययोगः, स आत्माश्रितसाम्ययोगः। कर्म्मणामनिवार्य्यत्वात् केषांचित्कर्म्मणामबन्धनत्वाच्च कर्म्मपरित्यागानौचित्यम्-इत्यात्माश्रितसाम्ययोगोपनिषत्। कर्म्मणामनिवार्य्यत्वं पञ्चधा। पञ्चविधानां कर्म्मणामबन्धनत्वम्। इत्युपनिषत्।

# (४) बुद्धियोगप्रतिबन्धकदोषपरित्यागौचित्योपनिषत्

१—इन्द्रियधर्म्मत्वादनात्मधर्म्मयोः प्रकृत्यधिष्ठानयो रागद्वेषयोरासक्तिहेतुत्वाद् बुद्धियोगपरिपन्थित्वम् ।

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥३।३३॥
इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥३।३४॥
श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात्स्वनुष्ठितात् ।
स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः ॥३।३५॥

२—इन्द्रियमनोबुद्ध्यधिष्ठानयो रागद्वेषयोर्बुद्धिद्वारा प्रत्यगात्मावरणत्वाद्विदूषितस्यात्मनः पारवश्येनानिष्टकर्म्माचरणे प्रवृत्तिः ।

**अर्जुन उवाच**

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय ! बलादिव नियोजितः ॥३।३६॥

**श्रीभगवानुवाच**

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा* विद्ध्येनमिह वैरिणम् ॥३।३७॥
धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥३।३८॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥३।३९॥

---

* महापाप्मेति—रागद्वेषौ कामक्रोधौ पाप्मा। आत्मविद्याभागस्य रश्मिभूतं ज्ञानं बुद्धौ मनसि इन्द्रियेषु चानुवर्तन्ते। ज्ञाने च रागद्वेषौ पाप्मानौ संसृष्टौ ज्ञानं विज्ञानं च नाशयतः। तत्रैतौ पाप्मानौ प्रागिन्द्रियेषु ततो मनसि ततो बुद्धौ तत आत्मनि च ज्ञानं मलिनयतः। बुद्धिपर्य्यन्तमनुगतयोर्यदि बुद्धेः परतो रागद्वेषौ संस्तम्भयति, तर्हि सतोरपि रागद्वेषयोरात्मापवारकत्वं नोपपद्यते—इत्युपनिषत् ॥

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥३।४०॥

**३—इन्द्रियमनोबुद्धिनिग्रहणाद्रागद्वेषासक्तिनिवृत्तिः ।**

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥३।४१॥
इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥३।४२॥
एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥३।४३॥

**इति तृतीयाध्यायः ॥३॥**

---

# (५) बुद्धियोगस्य भगवन्मतसिद्धसनातनत्वोपनिषत्

**१—राजर्षिषु सनातनबुद्धियोगविद्याया भगवत्प्रवर्तिततत्वम् ।**
**साम्ययोगस्य ज्ञानयोगकर्म्मयोगाभ्यामतिप्राचीनत्वम् ॥**

**श्रीभगवानुवाच**

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवे ऽब्रवीत् ॥४।१॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ! ॥४।२॥
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥४।३॥

**२—नानादेहधारिणः कृष्णस्याच्युतभगवत्त्वाज्जातिस्मरत्वम् ।**

**अर्जुन उवाच**

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥४।४॥

**श्रीभगवानुवाच**

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद* सर्वाणि न त्वं वेत्थ परंतप ॥४।५॥

---

***तान्यहं वेद सर्वाणीति—भाग० १०।३**
**अदृष्ट्वान्यतमं लोके शीलौदार्यगुणैः समम्**
**अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः ॥४१॥**
**तयोर्वां पुनरेवाहमदित्यामास कश्यपात् ।**
**उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः ॥४२॥**
**तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषाथ वाम् ।**
**जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति ॥४३॥**
**एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे ।**
**नान्यथा मद्भवं ज्ञानं मर्त्यलिङ्गेन जायते ॥४४॥**
**युवां वां पुत्रभावेन ब्रह्मभावेन चासकृत् ।**
**चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम् ॥४५॥**
**इत्येवं समानयोरेव मातापित्रोस्त्रीणि जन्मान्युक्तानि ॥**

**३—श्रीकृष्ण*स्याधिकारिकरूपत्वात्स्वेच्छया नानाजन्मग्राहित्वं जातिस्मरत्वं च ।**

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ।।४।६।।
यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्म्मस्य तदाऽऽत्मानं सृजाम्यहम् ।।४।७।।
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
†धर्म्मसंस्थापनार्थाय संभवामि युगे युगे ।।४।८।।
जन्म कर्म्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ।।४।९।।

---

***श्रीकृष्णस्येति—श्रीकृष्णस्याश्वत्थिकजीवत्वाभावः । आधिकारिकरूपत्वम् । कर्म्माधीनपरवशजन्मग्रहणाभावः । स्वेच्छाधीनानेकशरीरग्रहणम् ।**
**†धर्मसंस्थापनार्थायेति—**
**यदा यदेह धर्मस्य क्षयो वृद्धिश्च पाप्मनः ।**
**तदा तु भगवानीश आत्मानं सृजते हरिः ।।भा० ९।२४।५६।।**
**न ह्यस्य जन्मनो हेतुः कर्म्मणो वा महीपते ।**
**आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः ।।भा० ९।२४।५७।।**

# (६) बुद्धियोगाविरोधिकर्म्मयोगज्ञानयोगोपादेयत्वोपनिषत्

**१—कर्म्मण उपासनाया ज्ञानस्य चाव्ययाभिगामित्वे सत्यबन्धनत्वम् ।**

वीतरागभयक्रोधा* मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥४।१०॥
ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥४।११॥
काङ्क्षन्तः कर्म्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्म्मजा ॥४।१२॥

**२—चातुर्वर्ण्यकर्म्मणामव्ययात्मोपजनितत्वेनाबन्धनत्वम् ।**

चातुर्वर्ण्यं मया सृष्टं गुणकर्म्मविभागशः ।
तस्य कर्तारमपि मां विद्धचकर्त्तार†मव्ययम् ॥४।१३॥
न मां कर्म्माणि लिम्पन्ति न मे कर्म्मफले स्पृहा ।
इति मां योऽभिजानाति कर्म्मभिर्न स बध्यते ॥४।१४॥
एवं ज्ञात्वा कृतं कर्म्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्म्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥४।१५॥

**३—त्याज्यकर्म्मोपादेयकर्म्मविवेके ज्ञानानुस्यूतस्य निवृत्तकर्म्मणो ज्ञानाग्निदग्धत्वात् संस्काराजनकत्वेनाबन्धनत्वम् ।**

किं कर्म्म‡ किमकर्म्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥४।१६॥
कर्म्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्म्मणः ।
अकर्म्मणश्च बोद्धव्यं गहना कर्म्मणो गतिः ॥४।१७॥

---

* वीतरागेति—रागद्वेषभयादयः पाप्मानः—आत्मज्योतिषो ज्ञानस्यावरकत्वात् । सत्यम्, तपः, ब्रह्मचर्य्यम्, ज्ञानमिति पावनानि पवित्राणि—आत्मानावरकत्वात् । आत्मज्योतिराप्यायकत्वाच्च ॥

† विद्धचकर्तारमव्ययमिति—सूर्य्यरश्मीनां जलतापकत्वेऽप्यतापकत्वम् । न जलतापाय स्पृहा, न जलस्य सूर्य्यरश्मौ लेपः । अक्लेशात् । आत्मविदूषकपाप्मनामसहयोगेन कृतानां कर्म्मणामबन्धनत्वम् ॥

‡ किं कर्म्मेति—

१—क्रतुः, कृतिः, यत्नः, अध्यवसायः । आत्मबलत्यागाय मनोव्यापारः । (आग्रेमपृष्ठे)

कर्म्मण्यकर्म्म* यः पश्येदकर्म्मणि च कर्म्म यः ।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्म्मकृत् ॥४।१८॥
यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्म्माणं तमाहुः पण्डितं बुधाः ॥४।१९॥
त्यक्त्वा कर्म्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्म्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः ॥४।२०॥
निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म्म कुर्वन्नाप्नोति किल्विषम् ॥४।२१॥
यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबद्धचते ॥४।२२॥

**४—ब्रह्मार्पणयज्ञः[१], दैवयज्ञः[२], ब्रह्माग्नियज्ञः[३], संयमाग्नियज्ञः[४], इन्द्रियाग्नियज्ञः[५], योगाग्नियज्ञः[६], द्रव्ययज्ञः[७], तपोयज्ञः[८], योगयज्ञः[९], स्वाध्याययज्ञः[१०], ज्ञानयज्ञः[११], प्राणायामयज्ञः[१२], प्राणयज्ञः[१३]—इति त्रयोदशविधानि अबन्धनानि यज्ञकर्म्माणि ।**

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म्म समग्रं प्रविलीयते ॥४।२३॥
ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ॥
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना ॥४।२४॥
दैवमेवापरे यज्ञं योगिनः पर्य्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥४।२५॥

---

**(पूर्वपृष्ठशेषः) २—क्षणकर्म्म—चेष्टा । अन्यत्राधानार्थः स्वबलप्रयोगः । अन्यथासतो बलस्यान्यथात्वं क्षणः ।**

**३—भावकर्म्म—गमनपठनभाषणादिव्यवसायः ।**

**४—संस्कारकर्म्म—वासना । दोषमार्जनमतिशयाधानं हीनाङ्गपूर्तिश्चेति ।**

**५—विकारकर्म्म—अनव्ययमव्ययाश्रितधर्म्मम्, दोषः, पाप्मा ।**

**६—सत्त्वकर्म्म—घटपटपुरुषादिरुत्पन्नः प्राणी ।**

*** कर्म्मण्यकर्म्मेति—ब्रह्म द्वेधा विवर्तते—अमृतं मृत्युश्चेति । "अन्तरं मृत्योरमृतं मृत्यावमृतमाहितम्" इति श्रूयते । अङ्गुलिः कम्पमाना बलवद्रसः । तत्र दृश्यते अङ्गुल्यां क्रिया, क्रियायां वेयमङ्गुलीति । रसोऽयमकर्म्म, बलं कर्म्म । तदाह—कर्म्मण्यकर्म्म अकर्म्मणि कर्म्मेति । अत एवायं रसः कर्म्मसम्बन्धात् त्रिविधो भवति—सत्ता—चेतना—आनन्दश्चेति । बले कर्म्मण्यधिष्ठितमन्तराहितममृतं सत्तानाम रूपम् । बलस्य कर्म्मण्यधिष्ठानममृतं चेतना नाम रूपम् । चेतनायां ज्ञाने कर्म्मेदं विषयतयाऽन्तर्निविष्टं भवति । अथ कर्म्मणा यावदिव न स्पृश्यते, तदिदं कर्म्मणः पृथग्भूतं स्वरूपेणामृतमानन्दो नाम रूपम् । तथा चानन्द एवैकं विशुद्धं ब्रह्मतत्त्वं कर्म्मस्पर्शास्पर्शाभ्यां त्रैरूप्यं भजते ।**

**तथा चैवं कर्म्मण्यकर्म्म—अकर्मणि च कर्म्म पश्यन् मृत्युं चामृतं च विवेकेन पश्यति । अमृतावच्छेदकं मृत्युं पृथक्त्वेन पश्यन् विश्वव्यापकमेकरसमेतमात्मानं पश्यति । सर्वाण्येव कर्म्माणि तत्रोपसन्नानीत्याह—कृत्स्नकर्म्मकृदिति । कर्म्मणि दृष्टा सत्ता न कर्म्मव्यामिश्रा । कर्म्मगर्भिता चेतना न कर्म्मव्यामिश्रा । तस्माद् रस एवैतानि रूपाणि-सत्ता-ज्ञानमानन्द इति ॥**

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥४।२६॥
सर्वाणीन्द्रियकर्म्माणि प्राणकर्म्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥४।२७॥
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥४।२८॥
अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥४।२९॥
अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥४।३०॥
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥४।३१॥
एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्म्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥४।३२॥

**५—द्रव्ययज्ञापेक्षया ज्ञानयज्ञस्य कर्म्मबन्धक्षयहेतुत्वाद्, मोहोत्पत्तिप्रतिबन्धहेतुत्वाद्, आत्मनि परमात्मनि सर्वभूतसत्तानुभवहेतुत्वाच्च श्रेष्ठत्वम् ।**

श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।
सर्वं कर्म्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥४।३३॥
तद्विद्धि प्राणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनंस्तत्त्वदर्शिनः ॥४।३४॥
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ! ।
येन भूतान्यशेषेण द्रक्षस्यात्मन्यथो मयि ॥४।३५॥
अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥४।३६॥
यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुते ऽर्जुन ।
ज्ञानाग्निः सर्वकर्म्माणि भस्मसात् कुरुते तथा ॥४।३७॥
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥४।३८॥
श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥४।३९॥
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नाऽयं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥४।४०॥
योगसंन्यस्तकर्म्माणं ज्ञानसंच्छिन्नसंशयम् ।
आत्मवन्तं न कर्म्माणि निबध्नन्ति धनंजय ॥४।४१॥
तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥४।४२॥

**इति चतुर्थोऽध्यायः ॥ ४ ॥**

---

# (७) बुद्धियोगस्य कामासक्तिसंन्यासोपलक्षितकर्म्मारम्भ-लक्षणत्वात् कर्म्मयोग-ज्ञानयोगोभयात्मकत्वोपनिषत्

**१—कर्म्मयोगश्रैष्ठ्योपदेशे ज्ञानयज्ञश्रैष्ठ्योपदेशात्संशये प्रश्नः ।**

**अर्जुन उवाच**

संन्यासं कर्म्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ।।५।१।।

**२—कर्म्मयोग-ज्ञानयोगयोर्बुद्धियोगेनैकभाव्ये योगिनः प्रत्यगात्मनो ब्रह्मसिद्धिः ।**

**श्रीभगवानुवाच**

संन्यासः कर्म्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्म्मसंन्यासात् कर्म्मयोगो विशिष्यते ।।५।२।।
ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ।।५।३।।
सांख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ।।५।४।।
यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं[1] सांख्यं च योगं च यः पश्यति स पश्यति ।।५।५।।
संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ।।५।६।।
योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ।।५।७।।
नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ।।५।८।।
प्रलपन् विसृजन् गृह्णन्नुन्मिषन् निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ।।५।९।।

---

[1] एकं सांख्यं च योगं चेति—ज्ञानस्य कर्म्मपृथक्त्वेन विशुद्धरूपेणोपस्थानं सांख्यबुद्धिः । ज्ञानस्य सविषयकस्य कर्म्मापरित्यागेन तत्सहकारेण ज्ञानोपासनं बुद्धियोगबुद्धिः । सांख्यबुद्धिः सांख्यम् । बुद्धियोगबुद्धिर्योग इति संक्षेपशब्दः । एक एवार्थः सांख्यं च योगश्च । उभयथा ज्ञानस्यैवोपासितत्वात् । कर्म्मविकलस्य कर्म्मसकलस्य वा ज्ञानस्यार्थतो भेदाभावात् ।।

ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।।५।१०।।
कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ।।५।११।।
युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ।।५।१२।।
सर्वकर्म्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन् न कारयन् ।।५।१३।।

---

**३—अव्ययस्यात्मनो ज्ञानज्योतिषो रागद्वेषविकारासंयोगे सोपसर्गानुपसर्गादिकर्म्मकृतसर्वावस्थास्वेकरसत्वम् ।**

न कर्तृत्वं न कर्म्माणि लोकस्य सृजति प्रभुः ।
न कर्म्मफलसंयोगं स्वभावस्तु प्रवर्तते ।।५।१३।।
नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।।५।१५।।
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ।।५।१६।।

---

**४—बाह्यविषयसंयोगजसुखापेक्षया आत्मान्तःसुखस्य नित्यशान्तत्वात् प्राशस्त्यम् ।**

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ।।५।१७।।
विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ।।५।१८।।
इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः ।।५।१९।।
न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः ।।५।२०।।
बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत् सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ।।५।२१।।
ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय ! न तेषु रमते बुधः ।।५।२२।।

---

**५—निवृत्तरागद्वेषकामानां प्रत्यावृत्तचक्षुषाममृतत्वविदां विजितात्मनामन्तर्ज्योतिष्ट्वादन्तरारामत्वमन्तःसुखत्वं च ।**

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ।।५।२३।।

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ।।५।२४।।
लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ।।५।२५।।
कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ।।५।२६।।

---

**६—परमशान्तिहेतोरात्मज्ञानस्योपायभूत-योगाभ्यासवशात् सर्वदुःखोपशमसिद्धिः ।**

स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ।।५।२७।।
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ।।५।२८।।
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।।५।२९।।

**इति पञ्चमोध्यायः ।।**

---

**७—बुद्धियोगिनः सर्वकर्म्मारम्भकत्वात् कर्मयोगित्वं च, संकल्पकामासक्तिसंन्यासात् संन्यासित्वं च ।**

**श्रीभगवानुवाच**

अनाश्रितः कर्म्मफलं कार्य्यं कर्म्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ।।६।१।।
यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ! ।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ।।६।२।।
आरुरुक्षोर्मुनेर्योगं कर्म्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ।।६।३।।
यदा हि नेन्द्रियार्थेषु न कर्म्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ।।६।४।।

---

**८—ज्ञानयोगादात्मविजयसिद्धिरिति—अजितात्मन्यनात्मनि कर्म्मयोगस्य दुःखानुविधायित्वम् ।**

उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।।६।५।।
बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः ।।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ।।६।६।।

---

**९—कर्म्मयोगेन कर्म्मनिष्ठस्यापि ज्ञानयोगेन जितात्मनः समबुद्धित्वोदयात् प्राशस्त्यम् ।**

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ।।६।७।।

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥६।८॥
सुहृन्मित्रार्य्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥६।९॥

---

# (८) बुद्धियोगसाधनकर्म्मयोगोपादेयत्वोपनिषत्

**१—बुद्धियोगसिद्ध्युपायभूतं योगाभ्याससाधनम् ।**

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥६।१०॥
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥६।११।
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥६।१२॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥६।१३॥
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥६।१४॥
युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥६।१५॥

---

**२—योगाभ्याससाधने साधकबाधकौ ।**

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ! ॥६।१६॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्म्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥६।१७॥

---

**३—बुद्धियोगसिद्धिलक्षणम् ।**

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥६।१८॥
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥६।१९॥

---

**४—बुद्धियोगस्वरूपलक्षणम् ।**

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥६।२०॥
सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ॥
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥६।२१॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥६।२२॥
तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगो ऽनिर्विण्णचेतसा ॥६।२३॥

---

**५—बुद्धियोगसिद्धये योगाभ्यासानुष्ठानक्रमः ।**

संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥६।२४॥
शनैः शनैरुपरमेद् बुद्धया धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥६।२५॥
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ॥
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥६।२६॥
प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥६।२७॥
युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥६।२८॥

---

**६—बुद्धियोगसाधने समबुद्धित्वानुध्यानाभ्यासक्रमः ।**

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥६।२९॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥६।३०॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥६।३१॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ! ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥६।३२॥

---

**७—बुद्धियोगसिद्ध्यौपयिकमनःस्थिरताविचारः ।**

**अर्जुन उवाच**

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ! ।
एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥६।३३॥

चञ्चलं हि मनः कृष्ण ! प्रमाथि बलवद् दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥६।३४॥

**श्रीभगवानुवाच**

असंशयं महाबाहो ! मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय ! वैराग्येण च गृह्यते ॥६।३५॥
असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥६।३६॥

---

**८—दैवाद् योगभ्रष्टस्योदर्कविचारः ।**

**अर्जुन उवाच**

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण ! गच्छति ॥६।३७॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥६।३८॥
एतन्मे संशयं कृष्ण ! च्छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥६।३९॥

**श्रीभगवानुवाच**

पार्थ ! नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत् कश्चिद् दुर्गतिं तात ! गच्छति ॥६।४०॥
प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥६।४१॥
अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥६।४२॥
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन !॥६।४३॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥६।४४॥
प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्विषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥६।४५॥

---

**९—कर्म्मयोगि-तपोयोगि-ज्ञानयोगिभ्यो बुद्धियोगिनः श्रेष्ठत्वम्, बुद्धियोगिष्वपि श्रद्धावतः श्रेष्ठत्वम् ।**

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्म्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ! ॥६।४६॥

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ।।६।४७।।

**इति षष्ठोऽध्यायः ।।**

---

**इति भगवद्गीतोपनिषदि रागद्वेषक्लेशनिवर्त्तिका वैराग्यबुद्धियोगलक्षणा भगवद्विद्या-परपर्याया प्रथमा राजर्षिविद्या समाप्ता ।**

---

# अथ सिद्धविद्याया ज्ञानबुद्धियोगेन संस्कार आदिश्यते

प्रकृतिपुरुषविवेकज्ञानम्, तथा चतुरधिकरणं ब्रह्मकर्म्माभिनयलक्षणविज्ञानम्, अधिकरणविनिमयविज्ञानं चेति ज्ञानविज्ञानाभ्यां द्विविधाभ्यां भावनाभ्यां जीवाव्ययस्य स्वरूपकैवल्यनिर्धारणं ज्ञानविद्या नाम। सेयं पुरायुगे सांख्यशास्त्रप्रवर्तककपिलादिसिद्धकुले भूयसा प्रचरति स्म। तत्रत्यकतिपयानुपादेयविषयाणां परिशोधनाय तदुपादेयविषयाणां चानुज्ञानाय केषुचिदंशेषु स्वसंमतिं दर्शयितुं तामप्येतां सिद्धविद्यामिह गीतायां भगवानन्वादिशति—अष्टपञ्चाशन्मितैः श्लोकैः (५८)॥

तत्र तावदव्यये बुद्धियोगः कल्याणहेतुः, ज्ञानबुद्ध्युपपादकः प्रत्ययः सिद्धविद्यारहस्यम्। ज्ञानं हि अन्तर्ज्योतिः सिद्धविद्यायां बुद्धेरव्यये प्रवेशद्वारमिष्यते, ज्ञानविज्ञानाभ्यामज्ञानमोहावरणनाशाद्विशुद्धस्वरूपतया सान्तर्ज्योतिमयी बुद्धिरप्रतिबन्धमव्यये युज्यते।

## (१) प्रकृति-पुरुषविवेकज्ञानोपनिषत्।

**१—पुरुषसाक्षात्कारोपयोगिज्ञानविज्ञानोपदेशोपक्रमः।**

श्रीभगवानुवाच

मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥७।१॥
ज्ञानं[1] तेऽहं स[2]विज्ञानमिदं वक्ष्याम्यशेषतः।
यज् ज्ञात्वा नेह भूयोऽन्यज् ज्ञातव्यमवशिष्यते ॥७।२॥
मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये[3]।
यततामपि सिद्धानां कश्चिन् मां वेत्ति तत्त्वतः ॥७।३॥

---

**२—पुरुषस्याव्ययात्मनः क्षराक्षरप्रकृतिद्वैविध्यम्।**

भूमि[4]रापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥७।४॥

---

[1] **ज्ञानमिति—विश्वेषामधिष्ठानत्वेनैकस्मिन् ब्रह्मणि बुद्धेरवगाहनं ज्ञानम्। कार्य्येभ्यः कारणदृष्टिर्ज्ञानम्॥**

[2] **सविज्ञानमिति—ब्रह्मण्यध्याहितत्वेन बहुषु कर्म्मसु बुद्धेरवगाहनं विज्ञानम्। कारणात् कार्य्येषु दृष्टिर्विज्ञानम्॥**

[3] **सिद्धये-इति—आत्मनः सर्वावरणनिराकरणात् स्वीयवास्तविकज्योतिःस्वरूपावाप्तिः परमा सिद्धिः। अज्ञानिजीवस्य ज्ञानमयात्मत्वस्वरूपावाप्तिः सिद्धिः॥**

[4] भूमिरापोऽनलो वायुः खमिति—

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्य्यते जगत् ।।७।५।।



३––प्रकृतेरशेषजगदुपादानत्वम्, पुरुषस्याशेषजगदाधारत्वम् ।

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।।७।६।।
[1]मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ! ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।।७।७।।

---

पुरुषः[1] । अव्यक्तम्[2] । महान्[3] । अहंकारः[4] । बुद्धिः[5] । मनः[6] । पञ्चार्थाः[7] । पञ्चेन्द्रियाणि[8] । शरीरम्[9]––इत्येतेषु नवसंख्येषु अध्यात्मभावेषु शरीरस्येन्द्रियाणां च विकारत्वम् । पञ्चार्थाः मनोबुद्धच-हंकाराश्चेत्येतेषां प्रकृतिविकृतित्वादपरप्रकृतित्वम् । महतश्चाव्यक्तस्य चाविकृतित्वात् परप्रकृतित्वम् । अव्यक्तमक्षरम् । महत् क्षरम् । एकस्यैव ब्रह्मणोऽर्द्धममृतमर्द्धं मर्त्यमिति श्रूयते । तत्रामृतेऽस्मिन्नक्षर-शब्दः । मर्त्ये तु क्षरशब्दः । क्षराक्षराभ्यां द्वेधा विभक्तस्यापि विशिष्टस्यैकत्वादिहैकत्वेन परप्रकृतेरुप-देशः । क्षरः परिणामी विकुर्वाणः । अक्षरोऽपरिणामी न विकुरुते । एवमपि क्षरभागद्वारैतदक्षरस्य प्रकृतित्वमादिश्यते । तथा च श्रूयते––

"यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ।
तथाक्षराद्विविधाः सोम्य ! भावाः प्रजायन्ते तत्र चैवापियन्ति ।"
यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति ।
यथा सतः पुरुषात् केशलोमानि तथाक्षरात् संभवतीह विश्वम् ।" (मुण्डके)

महत् क्षरं त्रेधा रूपं धत्ते––अक्षरस्थो मर्त्यः क्षरपुरुषः सत्त्वम् । तद्विकारक्षरो रजः । तस्य पञ्चीकरणाद याज्ञिकं रूपं तमः ।।

| | | | |
|---|---|---|---|
| **आत्मा = पुरुषः––** | **१० अहम्** | = | **अव्ययः ।** |
| **परा = प्रकृतिः––** | **९ अव्यक्तम्** | = | **शान्तात्मा ।** |
| | **८ अहंकारः** | = | **सत्त्वात्मा ।** |
| | **७ बुद्धिः** | = | **विज्ञानात्मा ।** |
| | **६ मनः** | = | **प्रज्ञानात्मा प्राणात्मा च** |
| **अपरा प्रकृतिः** | **५ आकाशः** | | **भूतात्मा** |
| | **४ वायुः** | | |
| | **३ तेजः** | | |
| | **२ आपः** | | |
| | **१ भूमिः** | | |

**[1]मत्तः परतरं नान्यदिति––तरङ्गभङ्गिफेनबुद्बुदादीनां समुद्रप्रतिष्ठापरायणकत्वात् समुद्रपरत-रत्वाभाववद्, अव्ययसमुद्रे कृत्स्नं जगदुद्भूयोद्भूय विलीयते । यावन्तो ब्रह्मविवर्ता भावाः, यावन्तो**

**४–पुरुषस्यैकस्य परापरप्रकृतिवशादशेषजगद्भावित्वे पञ्चदशोदाहरणानि ।**

†रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्य्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥७।८॥
पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥७।९॥
बीजं मां सर्वभूतानां विद्धि पार्थ ! सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥७।१०॥
बलं बलवतामस्मि कामरागविवर्जितम् ।
धर्म्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ !॥७।११॥

---

**५—प्रकृतिगुणत्रयभिन्नानामपि भावानां मायिकानां प्रकृतिद्वारा पुरुषनिष्ठत्वम् ।**

ये चैव सात्त्विका भावा* राजसास्तामसाश्च ये ।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥७।१२॥

---

**वा ब्रह्मप्रकृतिवैकारिका गुणभावाः, सर्वेप्येते उभये अव्ययसमुद्रं नातिवर्तन्ते । अव्ययस्थानामव्यय-प्रकृतिस्थानां वा अव्ययसमुद्रे एवैकान्ततोऽवस्थानात् । अव्ययविभूतिमत्त्वमव्यययोगित्वं वाऽव्ययजत्वम् । एवं प्रकृतिविभूतिमत्त्वं प्रकृतियोगित्वं वा प्रकृतिजत्वम् । प्रकृतिजे भावे अव्यययोगो नास्ति । न त्वयन्तेषु, अव्यये तु ते तिष्ठन्त्येवेति बोध्यम् ।**

† रसोहमप्सु कौन्तेय—इत्यादि—

| | | | | | |
|---|---|---|---|---|---|
| १ | पृथिव्याम् = गन्धः | ६ | वेदेषु = प्रणवः | ११ | सर्वभूतानाम् = बीजम् |
| २ | अप्सु = रसः | ७ | नृषु = पौरुषम् | १२ | बुद्धिमताम् = बुद्धिः |
| ३ | अग्नौ = तेजः | ८ | सूर्य्याचन्द्रयोः = प्रभा | १३ | तेजस्विनाम् = तेजः |
| ४ | वायौ = स्पर्शः | ९ | सर्वभूतेषु = जीवनम् | १४ | बलवताम् = बलम् |
| ५ | आकाशे = शब्दः | १० | तपस्विषु = तपः | १५ | भूतानाम् = { कामो— धर्म्माविरुद्धः |

*ये चैव सात्त्विका भावाः—इति । भावा द्विविधाः—सात्मकाः—निरात्मकाश्च । आत्मना विधृताः प्रकृतेर्विकाराः प्रकृतिं बिभ्रति नात्मानम् । कार्य्याणां स्वकारणानुविधायित्वात् । पर्वते मनुष्य-वृक्षादयः, न तु ते पर्वताः—तस्मात्ते निरात्मकाः । अथ ये आत्मानं बिभ्रति ते आत्मभृत आत्मचितः । यथा बुद्धौ ज्ञाने, मनसीच्छायां विषयाः पर्य्यवतिष्ठन्ते, किन्तु न तेषु विषयेषु मनोबुद्धी, इच्छाज्ञाने भासेते—अचेतनत्वात् । तथान्यत्र यस्मिन्—अव्ययस्य योगः, स आत्मभृत् आत्मन्वी सात्मको भावः । यस्मिन् विभूतिमात्रं न योगः, स निरात्मको भावः । प्रकृतिजाते भावे प्रकृतेर्योगश्च विभूतिश्च । अव्य-यस्य तु पुरुषस्य तत्र विभूतिमात्रं न योगः, प्रकृतिमात्रपर्य्याप्तत्वात् । तथा च—सात्मको विवर्तभावो विद्यामयाव्ययस्यात्मन आवरको नोपपद्यते—अव्ययस्योल्बणत्वात् । अथ गुणभावे विकारभावे चायम-व्ययो नास्तीत्यनात्मकेन तेन विद्यामयाव्ययस्यावरणमुपपद्यते । अत एव गुणमयैर्भावैरावरणं भवती-त्याह—॥ इदन्तु बोध्यम्—विशुद्धं सत्त्वं नात्यन्तमावृणुते; रजस्तमसी तु दोषत्वादावृण्वाते । तन्मिश्रं

**६—शुद्धसत्त्वमयी प्रकृतिर्देवप्राणोपस्थापकत्वाद् दैवी माया ॥ अथ मलिनसत्त्वादिगुणत्रयवती प्रकृतिरासुरप्राणोपसंक्रामकत्वाद्—आसुरी माया। दैवमायावशादभासितस्यात्मनो बुद्धियोगवशात् साक्षात्कारेऽपि आसुरमायावृतस्य बुद्धियोगाय प्रवृत्त्ययोगात् साक्षात्कारासंभवः।**

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥७।१३॥
दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥७।१४॥
(१) न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥७।१५॥

---

**७—आत्मार्पितमनोबुद्ध्यभ्यासेन बुद्धियोगप्रवृत्तानां चातुर्विध्यम्, तेषु ज्ञानिनोऽनन्यभक्तित्वात् श्रैष्ठ्यम्।**

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन !
आर्तो[1] जिज्ञासु[2]रर्थार्थी[3] ज्ञानी[4] च भरतर्षभ ! ॥७।१६॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥७।१७॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥७।१८॥
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥७।१९॥

---

**८—दैवमायावृतात्मनः स्वात्माश्रिततत्तद्देवताराधनया देवताधारभूताव्ययप्रसादादैहिकामुष्मिकसर्वविधकामानां सिद्धावपि, आत्मसाक्षात्कारस्य विशुद्धाव्ययार्पितमनोबुद्ध्यभ्यासात् सिद्धिः।**

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥७।२०॥
यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥७।२१॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान्हि तान् ॥७।२२॥

---

सत्त्वं मलिनं भूत्वा पुनरावृणुते। रजस्तमोमयभावसंपादका जना दुष्कृतिनो मूढाः। ते अव्ययात्मानं न प्रपद्यन्ते, तमसान्तरायेण प्रच्छन्नत्वात् ॥ ॥

१—न मां दुष्कृतिनो मूढाः—गुणत्रयभिन्नस्य गुणत्रयालम्बनस्यापरिणामिनो विशुद्धाव्ययस्य त्रैगुण्यात्मकमायाप्रच्छन्नतया तादृशत्रिगुणमायाप्रत्यन्तरितदृष्टिभिरासुरप्रकृतिभिर्दुष्कृतिभिरभास्यत्वम्।

अन्तवत्तु फलं तेषां तद् भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता[1] यान्ति मामपि ॥७।२३॥

———

९——योगमायापहृतज्ञानस्याव्ययपुरुषमात्मानमनवगाहमानस्याबुद्धेरात्मालम्बिततत्तद्देवताराधनप्रवणत्वम्।

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥७।२४॥
नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥७।२५॥

१०——रागद्वेषद्वन्द्वमोहेन मुग्धानां त्रिकालज्ञानमयात्मज्योतिर्व्यामोहनात् त्रैकालिकज्ञानाभावेऽपि निवृत्तरागद्वेषाणामात्मज्ञानज्योतिःप्रसादात् त्रिकालदर्शित्वसंभवः ।

वेदाहं समती[2]तानि वर्तमानानि चार्जुन ! ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥७।२६॥

---

[1]मद्भक्ता यान्ति मामपि——अमृतम्, ब्रह्म, सुब्रह्म, शुक्रम्, पाप्मा चेति——पञ्चनिकायः पुरुषो भवति । तत्र-अव्ययः, अक्षरः, क्षर इत्येतावानमृतः पुरुषः । तत्र गतिस्थितिबलशालि वाय्वाकाशलक्षणयजुरग्निर्ब्रह्म । अथ स्नेहतेजोबलशालि भृग्वङ्गिरोलक्षणमथर्वापः सुब्रह्म । अग्निगर्भाब्गर्भितवाङ्मयमण्डलं तु शुक्रम् । त्रीणि सत्यानि, त्रयो गुणाः, द्वे बुद्धी, तिस्रो मात्राः, बीजदेवभूतानां ग्रामाः पाप्मा । तत्र ब्रह्मसुब्रह्मणी ब्रह्म सत्यम् । शुक्रं देवसत्यम् । पाप्मा त्वनृतम् । तत्र भोक्तात्मा भूतात्मा यदि देवसत्यप्रवणः, स देवयाट् । अथ यदि अमृतप्रवणश्चेत् स आत्मभक्त आत्मानं याति ।

| अमृतशुक्रम् | | | मर्त्यशुक्रम् | | |
| --- | --- | --- | --- | --- | --- |
| वाक् | आपः | अग्निः | अग्निः | आपः | वाक् |
| अमृतम् । | अमृतम् । | अमृतम् । | मर्त्यम् । | मर्त्यम् । | मर्त्यम् । |
| सत्यानि । | गुणाः । | विद्याबुद्धिः । | अभिनिवेशः । | मात्रा । | शरीराणि |
| नियतिः । | सत्त्वम् । | धर्म्माः । | अविद्याबुद्धिः । | प्रज्ञा । | बीजग्रामः |
| वेदाः । | रजः । | ज्ञानम् । | मोहः । | प्राणाः । | देवग्रामः |
| अभ्वे नामरूपे । | तमः । | वैराग्यम् । | अस्मिता । | भूतानि । | भूतग्रामः |
| | | ऐश्वर्य्यम् । | रागद्वेषौ । | | |

[2]वेदाहं समतीतानीति——यद्यपि सर्वोऽयं भूतात्मा ज्योतिष्मानेव, तथापि सर्गकाले द्वन्द्वलक्षणं संमोहं यातीत्यज्योतिष्मान् भवति । तेन भूतं भव्यं वर्तमानं च सर्वं न जानाति-बुद्धियोगवैकल्यात् । दुष्कृतात्यये तु द्वन्द्वमोहविनिर्मुक्तः स्वेनैव प्रकाशेन भूतं भव्यं वर्तमानं च सर्वं यथावद् जानाति । अर्थात्——ज्योतिष्मत्त्वात् संस्काररूपेण स्थितत्वादतीतानि, बीजरूपेण स्थितत्वाद् भविष्याणि च वेद ।

इच्छा[1] द्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परन्तप ।।७।२७।।
येषान्त्वन्तगतं पापं जनानां पुण्यकर्म्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ।।७।२८।।

---

[1] इच्छाद्वेषेति--इच्छया ग्राह्यम् । द्वेषेण त्याज्यम् । आभ्यां द्वन्द्वमनेकधोत्पद्यते--सुखदुःखे; शुभाशुभे; प्रियाप्रिये; शीतोष्णे इत्यादि । द्वन्द्वलक्षणो मोहः । सर्वाण्येव भूतानि सर्गे निसर्गात् संमोहं यान्त्येव । मुक्तिपक्षे तु मोहाद् द्वन्द्वलक्षणात् त्यज्यन्ते । उभयोः साम्येनोपपत्ते रागद्वेषविनाशात् ।।

## *(२) [१]ब्रह्म[१]कर्मणी-[४]चतुरधिकरणम् [२]अहो रात्रौ [२]सर्गप्रलयौ [१]भक्तियोगः [१]आत्मगतिरिति द्वादशविज्ञानोपनिषत् ।

**१—योगमायावरणवशादात्मानवगाहे द्वादशस्वात्मायतनेषु मनोबुद्ध्यर्पणाभ्यासादात्मोपलब्धिः ॥**

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म (१) तद्विदुः कृत्स्नमध्यात्मं[४] कर्म्म (२) चाखिलम् ॥७।२९॥
साधि[२]भूताधिदैवं[१] मां साधियज्ञं[३] च ये विदुः ।
प्रयाण[५]कालेऽपि च मां तेविदुर्युक्तचेतसः ॥७।३०

**(इति सप्तमोऽध्यायः ॥)**

---

**२—ब्रह्मकर्म्मणोः[२], आधिदैविकाधिभौतिकयोः[२], आधियज्ञिका[२]ध्यात्मिकयोः, सृष्टिप्रलययोः[२], भोगमोक्षयोः[२], गत्यागत्योः[२], स्वरूपजिज्ञासायां तदुपपादनम् ।**

**अर्जुन उवाच**

किं तद् ब्रह्म(१) किमध्यात्मं[४]– किं कर्म्म(२) पुरुषोत्तम ! ।
अधिभूतं[२] च किं प्रोक्तम[१]धिदैवं किमुच्यते ॥८।१॥
अधियज्ञः[३] कथं कोऽत्र देहेऽस्मिन् मधुसूदन ! ।
प्रयाणकाले[५] च कथं ज्ञेयोऽसि नियतात्मभिः ॥८।२॥

---

*

| द्वादश विज्ञानानि | | |
|---|---|---|
| १ ब्रह्म<br>२ कर्म्म | १ अक्षरं परमं ब्रह्म—नियन्तृ ।<br>२ भूतभावोद्भवकरो विसर्गः वीर्य्यम् | १ सृष्टिः[७], प्रलयः[८]<br>३ भोगः[९], मोक्षः[१०] |
| १ अध्यात्मम्<br>२ अधिभूतम्<br>३ अधिदैवतम्<br>४ अधियज्ञम् | ३ स्वभावः, प्रकृतिप्रपञ्चः<br>४ क्षरभावः, भूतप्रपञ्चः<br>२ पुरुषः, दैवतप्रपञ्चः<br>१ अव्यय आत्मा, अमृतषोडशी | ५ गतिः[११], आगतिः[१२] |

१

**श्रीभगवानुवाच**

*अक्षरं ब्रह्म(१) परमं स्वभावोऽध्यात्म(३)मुच्यते। ।
भूतभावोद्भवकरो विसर्गः (२)कर्म्मसंज्ञितः† ॥८।३॥
अधिभूतं(४) क्षरो भावः पुरुषश्चाधि(५)दैवतम्। ।
अधि(६)यज्ञोऽहमेवात्र देहे देहभृतां वर ! ॥८।४॥

## गति-विद्या

**३—अथ गतिविद्यायामन्ते मतिः सा गतिरिति सिद्धान्तात् परावरभेदेन दैवगतिद्वैविध्यं भवति । तथा हि—तत्तल्लौकिकभावार्पितमनोबुद्धेः प्रेतस्य तत्तल्लौकिकभाव एव गतिः सा तावदवरा ॥ अथ तत्तद्भावाव्ययार्पितमनोबुद्धेः प्रेतस्य तत्तद्भावाव्ययो गतिः । सा च परा ।**

अन्तकाले(७) च मामेव(८) स्मरन् मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं(६) याति नास्त्यत्र संशयः ॥८।५॥
यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय ! सदा तद्भावभावितः ॥८।६॥

---

*अक्षरं ब्रह्म परममिति—ब्रह्मकर्म्मणी इत्यव्ययस्य द्वे भक्ती भवतः। आनन्दो विज्ञानं मनः—सेयं प्रकाशमयी विद्या-इत्यमृतं ब्रह्म। अथ मनः प्राणो वागिति मर्त्यं कर्म्म, सोऽयं भूतभावोद्भवकरो विसर्गः। विद्याभागानुगृहीतममृतं परमं ब्रह्माक्षरम्। विसर्गभागानुगृहीतं मर्त्यं क्षरम्। ब्रह्मकर्म्ममयः स क्षराक्षरविशिष्टोऽयमव्ययः पुरुष आत्मा यावदेतेषु चेतनप्राणिषूपपद्यते तदध्यात्मम्। यावदेतेषु जडभूतेषु तदधिभूतम्। यावद्वा देवेषु तदधिदैवतम्। अथ यावदमुष्मिन् दैवतभूतोत्पादके प्रजापतौ विज्ञायते सोऽधियज्ञः। अथवा—एतस्मिन् चेतनप्राणिन्येव यावदयं भूतकोशेऽभिव्याप्नोति तदधिभूतम्। यावद्वा दैवतकोशे तदधिदैवतम्। यावद्वा बीजकोशे तदध्यात्मम्। अथ यावदस्मिन् शरीरग्राहिणि शारीरके यज्ञात्मन्युपपद्यते सोधियज्ञ इत्येवमेकस्यैवाव्ययस्याधिकरणभेदेन साक्षात्कारः। अन्ते तु शरीरत्रयपरित्यागेन विशुद्धाव्ययैकभाव्यानुभवः।

**†कर्म्मसंज्ञिक इति—"वीर्य्यं वै कर्म्म" (वाजिश्रुतिः ७।४।१।२५) "विष्णोः कर्म्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा"। प्रादेशमात्रो वै गर्भो विष्णुरन्नम् ।७।४।१।१४। यत्तदन्नम्—एष स विष्णुर्देवता ।७।४।१।२१।"—**

| | |
|---|---|
| १ | **अधिदैवतम् = ईश्वरपुरुषः = ब्रह्म-कर्म्ममयः प्रजापतिः** |
| | **१—महामायावच्छिन्नः** |
| २ | **अधिभूतम् = क्षरभावः (ऐ) ब्रह्म-कर्म्ममया गुणविकाराः** |
| ३ | **अधियज्ञः = जीवपुरुषः = ब्रह्म-कर्म्ममयः प्रजापतिः** |
| | **२—योगमायावच्छिन्नः** |
| ४ | **अध्यात्मम् = स्वभावः (जै) ब्रह्म-कर्म्ममया गुणविकाराः** |
| | **अक्षरः विसर्गः** |
| ५ | **आधियज्ञिकाध्यात्मिकानां भावानाम्—आधिदैविकाधिभौतिकेषु गतिः** |

तस्मात् सर्वेषु कालेषु मामनुस्मर[६] युद्धच च ।
मर्य्यर्पित[६] मनो बुद्धिर्मामेवैष्यस्य[६] संशयः ॥८।७॥

---

**४––ईश्वरार्पितमनोबुद्धेः प्रेतस्य ईश्वरो गतिः । किन्तु ईश्वराव्ययार्पितमनोबुद्धेः प्रेतस्य ईश्वराव्ययो गतिः ॥**

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं[५] पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥८।८॥
कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥८।९॥
प्रयाणकाले मनसाऽचलेन भक्त्या[११] युक्तो योगबलेन चैव ।
भ्रुवोर्म्मध्ये प्राणमावेश्य सम्यक् स तं परं [५]पुरुषमुपैति दिव्यम् ॥८।१०॥

---

**५––एवं परावरभेदेनाक्षरगतिद्वैविध्याद् "ओम्" इत्येकाक्षरोच्चारणपूर्वकमक्षरानुस्मृतिपूर्वकं शरीरं *त्यजतस्तदक्षरमव्यक्तं गतिः । सा तावदवरा । अथ सेतुभूताक्षरद्वारा तदव्ययार्पितमनोबुद्धेः प्रेतस्य तदक्षराव्ययो गतिः । सा परा ॥**

यदक्षरं[५] वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥८।११॥
सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मध्न्याधायात्मनः प्राणमास्थितो[११] योगधारणाम् ॥८।१२॥
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥८।१३॥

---

**६––अथैतदन्यान्यजगद्भावं वा––ईश्वरं वा––अक्षरं वा––कंचिदप्यन्यमक्रोडीकृत्य विशुद्धमव्ययमेवानुचिन्तयन् यः प्रैति, तस्यायमात्माऽव्ययः साक्षाद् गृहीतत्वात् सुलभा परमा गतिः ॥ परमा संसिद्धिः ॥०॥**

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥८।१४॥

---

| | | | | |
|---|---|---|---|---|
| ४ | विकाराक्षरभूमिः | अग्नीषोमौ | देवसत्यम् | |
| | | वाक् | ब्रह्मसत्यम् | अव्यक्तपर्य्यवसाना गतिः । |
| * ३ | आत्माक्षरभूमिः | आपः | अमृतभूमिः | पुनरावर्तनीया लोकयात्रा । |
| | | प्राणः | | |
| २ | अक्षरभूमिः | | | परमा गतिः |
| १ | अव्ययभूमिः | | | अपुनरावर्तनीयं शान्तिधाम । |

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥८।१५॥

---

**७--अव्यक्तात्मक्षरपर्य्यवसायिनां सर्वेषां भूतविकाराणामात्मानुबन्धिभ्यां विद्याकर्म्मभ्यां पुनरावृत्त्य-पुनरावृत्तिभाक्त्वं ब्रह्माहोरात्रनिबन्धनसृष्टिप्रलयभाक्त्वं च ।**

आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ! ।
मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते ॥८।१६॥
सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥८।१७॥
अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥८।१८॥
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ ! प्रभवत्यहरागमे ॥८।१९॥

---

**८--अव्यक्तात्मक्षरमात्रपर्य्यवसायिनां भूतात्मनां पुनरावर्तित्वेऽपि तदव्यक्तक्षरात् परयोरव्यक्तयो--रक्षराव्ययोर्निर्विकारामृतरूपत्वात् तदनुगतानां भूतात्मनामपुनरावर्तितया परमा गतिः ॥**

परस्तस्मात्तु[६] भावोऽन्योऽव्यक्तो[५]ऽव्यक्तात् सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥८।२०॥
अव्यक्तो[५]ऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य[६] न निवर्तन्ते तद्धाम परमं मम ॥८।२१॥
पुरुषः[५] स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥८।२२॥

---

**९--ज्ञानकर्म्मजनितभावनावासनासंस्कारावच्छिन्नस्य भोक्तुः कर्म्मात्मनो विद्याप्राबल्ये विद्यामार्गेण शुक्लेन देवयानेन गमनात् क्रममुक्तिसिद्धेरपुनरावृत्तिः । कर्म्मप्राबल्ये तु कर्म्ममार्गेण कृष्णेन पितृयाणेन गमनात् पुनरावृत्तिः--इति गत्यागतिहेतुप्रतिपत्तिः ॥**

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ! ॥८।२३॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥८।२४॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ॥
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते ॥८।२५॥
†शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्त्तते पुनः ॥८।२६॥

---

†शुक्लकृष्णे गती ह्येते---इति---
"द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।

नैते सृती पार्थ ! जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ! ॥८।२७॥
वेदेषु यज्ञेषु तपस्सु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥८।२८॥

**इति अष्टमोऽध्यायः ॥**

**इति भगवद्गीतोपनिषदि मोहक्लेशनिवर्त्तिका ज्ञानबुद्धियोगपरिष्कृता***
**सिद्धविद्या समाप्ता ।**

---

ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं च ॥ ऋ० सं० (१०।८८।१५) ।

इति श्रुत्या––देवानां पितॄणामुत मर्त्यानां च कृते देवयानपितृयाणाख्यौ द्वौ मार्गौ प्रदर्शितौ भवतः । तत्र विद्यया देवयानः । कर्म्मणा पितृयाणः । तयोः ज्योतिरहः सितपक्षः इत्यादिभिः पृथक् पृथक् पर्वाण्युपदिशन्ति । तत्रैते देवयानस्यातिवाहका भवन्ति––

ज्योतिः, अहः, सितपक्षः, उत्तरायणम्, संवत्सरःसौर इति । तदनन्तरं "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति, स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्"–– इति कौषीतकिश्रुत्या तस्य ब्रह्मप्राप्तिरुपपद्यते, ततः स मानवावर्तमतिक्रान्तो मुक्तः सन् न पुनरावर्तते । अत एवोक्तम्––एकया यात्यनावृत्तिमिति ॥ एष वै देवयानः पन्थाः, अयमेव शुक्लमार्गः प्रकाशमयत्वात् । तथा च स्मर्य्यते––

नागवीथ्युत्तरं यच्च सप्तर्षिभ्यश्च दक्षिणम् ।
उत्तरः सवितुः पन्था देवयानः स वै स्मृतः ॥इति॥

"उत्तरा हि दिग् देवानाम् । दक्षिणा पितॄणाम्" ।

एवमेते पितृयाणस्यातिवाहकाः––धूमः, रात्रिः, कृष्णपक्षः, षण्मासा दक्षिणायनम्, संवत्सरश्चान्द्रश्चेति । तथा चोक्तम्––"अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति" इति । अर्थात् पितृलोकमागच्छति––"विधूर्ध्वभागे पितरो वसन्ती" ति स्मरणात् । तदनन्तरम्––"यदा तत् पर्य्यवैति अथैतमेवाध्वानं पुनर्निवर्तन्ते––तथा हि––चन्द्रम्, पुनराकाशम्, वायुम्, धूमाभ्र, मेघ वृष्टचन्नम्, रेतः, अथ पुरुषः इतीयं पुनरावृत्तिः प्रवर्तते । अत एव 'अन्ययावर्तते पुनः' इत्युक्तम् । सैष दक्षिणमार्गः पितृयाणः कर्म्मणा भवति । पितृयाणप्रदेशास्तु––

"उत्तरं यदगस्त्यस्य अजवीथ्याश्च दक्षिणम् ।
पितृयाणः स वै पन्था वैश्वानरपथाद् बहिः ॥इति॥

स चैष कृष्णमार्गः-सूर्य्यांशुराहित्यात् ।

*** परिष्कृतेति––विद्या द्विविधा––आत्मलक्षणा अव्ययभक्तिः प्रथमा । प्रकृतिलक्षणा बुद्धिभक्तिर्द्वितीया । तथा च अव्ययभक्तौ विद्यायामात्मरूपायां बुद्धिभक्तेः प्रकृतिलक्षणाया विद्याया योगो बुद्धियोगः । तेनात्मविद्यायां बुद्धिविद्याया योगादात्मनि प्रविष्टानामविद्यारूपाणां पञ्चक्लेशानां निवृत्तिर्भवति, विद्याबुद्धीनां वैराग्यज्ञानैश्वर्य्यधर्म्मलक्षणानामात्मप्रविष्टपञ्चक्लेशलक्षणाविद्याबुद्धिनिवर्तकत्वात् ॥०॥**

# अथ राजविद्याया ऐश्वर्यबुद्धियोगेन संस्कार आदिश्यते

सर्वैकप्रभवत्वलक्षणैश्वर्य्यज्ञानेन ईश्वरपुरुषं भावयतो जीवस्योभयाव्ययैकीभावादुद्धारः परा मुक्तिः, सेयं प्रथमा सिद्धिरलौकिकी ॥१॥ अथ ईश्वरसंबन्धिनानाविभूतिलक्षणैश्वर्य्यविज्ञानेन ईश्वरपुरुषं भावयतो जीवस्य ईश्वरानेकशक्त्यनुस्रवणाद् अभ्युदयविशेषोपलब्धिर्द्वितीया सिद्धिरैहलौकिकी ॥२॥ अथ ईश्वरपुरुषस्योपासनया सालोक्य-सामीप्य-सारूप्य-सायुज्यान्यतमसिद्धिलक्षणा जीवस्यापरा मुक्तिः, सेयं तृतीया सिद्धिः पारलौकिकी ॥३॥ तथा चेत्थं ज्ञानविज्ञानोपासनाभिस्त्रिविधाभिर्भावनाभिरीश्वरपुरुषे जीवपुरुषस्यानुगतिः––राजविद्या नाम ॥ सेयं पुराकाले कतिपयराजकुले भूयसा प्रचरति स्म । तदुपादेय-भूयोविषयाणामनुज्ञानाय स्वसंमतिं दर्शयितुं तामप्येतां राजविद्यामिह गीतायां भगवान् अन्वादिशति एकपञ्चाशदधिकशतमितश्लोकैः (१५१) ॥

## (१) ईश्वरस्वरूपज्ञानोपनिषत्

ईश्वरसाक्षात्कारौपयिकयो राजपर्षन्निगूहितयोर्ज्ञानविज्ञानयो राजविद्यात्वम् ।

श्रीभगवानुवाच

१––इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥९।१॥
राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्त्तुमव्ययम् ॥९।२॥
अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ! ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥९।३॥

---

२––असङ्गत्वादशेषभूतग्रामास्पर्शिनोऽपीश्वराव्ययपुरुषस्याशेषविकारपरायणपरापरप्रकृत्यधिष्ठा-तृत्वाद् भूतसृष्टचै प्रकृतिनियोक्तृत्वाच्च सर्वभूताधिष्ठातृत्वम् ॥

मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥९।४॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥९।५॥
यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥९।६॥
सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥९।७॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥९।८॥

न च मां तानि कर्माणि निबध्नन्ति धनंजय ! ।
उदासीनवदासीनमसक्तं तेषु कर्म्मसु ॥९।९॥
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्त्तते ॥९।१०॥

---

**३—आसुरमायामयप्रकृतिमतां मूढानां मनुष्यशरीरस्थेऽस्मिन्ननन्तशक्तिमति महेश्वरे प्रतिपत्त्यभावेन तदवज्ञानाज्ज्ञानवैकल्यं चेष्टावैफल्यं नैराश्यं वैचित्त्यं चापद्यते ।**

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥९।११॥
मोघाशा मोघकर्म्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥९।१२॥

---

**४—दैवमायामयप्रकृतिमतां तु महात्मनां सर्वविकाराभ्यन्तरतमाव्ययदृष्ट्या विकारवैशिष्ट्यान्नानात्वेन, विकारोपहितत्वादेकत्वेन वा प्रतिपत्तिभेदादनेकधोपासना ।**

महात्मानस्तु मां पार्थ ! दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥९।१३॥
सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥९।१४॥
ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥९।१५॥

---

**५—यज्ञारम्भकाणां यज्ञैकत्ववत्, भिन्नसंबन्धानां पुरुषैकत्ववत्, वेदविभक्तीनां वेदैकत्ववत्, प्रकृतिविकाराणां प्रकृत्येकत्वेनैकस्यैवेश्वराव्ययस्य सर्वत्रोपासना ।**

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥९।१६॥
पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव च ॥९।१७॥

---

**६—एकस्यैवेश्वराव्ययस्य विश्वकर्म्मत्वेन द्वादशधा विश्वस्मिन् विभवतः सर्वत्रोपासना ।**

गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥९।१८॥

---

**७—विरुद्धाविरुद्धसर्वद्वन्द्वसाधारणत्वेनैकस्यैवेश्वराव्ययस्य सर्वत्रोपासना ।**

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ! ॥९।१९॥

---

**८—ऐहिकामुष्मिकोन्नतिमिच्छद्भिस्त्रैविद्यैः कर्म्मयोगिभिस्त्रिकालज्ञमीश्वरमेव कर्म्मसाक्षिणमास्थाय कृतेन यज्ञकर्म्मणा ईश्वराव्ययोपासना ।**

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान् ॥९।२०॥
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्म्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥९।२१॥

---

**९—लययोग-राजयोग-मन्त्रयोग-हठयोगैश्चतुर्धा भिन्नानां भक्तियोगिनां सगुणविद्योपासकानां सान्तरायत्वादव्ययानवगाहितया मन्दफलत्वम् ।**

अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥९।२२॥
येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकम् ॥९।२३॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥९।२४॥
यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥९।२५॥

---

**१०—सर्वकर्म्मार्पणभक्तियोगेनाव्ययोपासनायाः कर्म्मबन्धनिवर्तकत्वम् ।**

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥९।२६॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय ! तत् कुरुष्व मदर्पणम् ॥९।२७॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्म्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥९।२८॥

---

**११—निर्गुणविद्योपासकानां ज्ञानयोगिनां विशुद्धैकाव्ययानन्यभक्तिमाहात्म्यम् ।**

समोऽहं सर्वभूतेषु न मे द्वेष्योस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥९।२९॥
अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥९।३०॥
क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय ! प्रतिजानीहि न मे भक्तः प्रणश्यति ॥९।३१॥
मां हि पार्थ ! व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥९।३२॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥९।३३॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥९।३४॥

**इति नवमोध्यायः ॥**

---

## (२) ईश्वरीययोगविभूतिलक्षणविज्ञानद्वयोपनिषत्

**१—ईश्वरविभूतिज्ञानमाहात्म्यम् ।**

**श्रीभगवानुवाच**

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ।।१०।१।।
न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ।।१०।२।।
यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ।।१०।३।।

---

**२—आध्यात्मिकमानसभावानामीश्वराव्ययानुभावितत्वम् ।**

बुद्धि[१]र्ज्ञान[२]मसंमोहः[३] क्षमा[४] सत्यं[५] दमः[६] शमः[७] ।
सुखं[८] दुःखं[९] भवो[१०] भावो[११] भयं[१२] चाभयमेव[१३] च ।।१०।४।।
अहिंसा[१४] समता[१५] तुष्टि[१६] स्तपो[१७] दानं[१८] यशो[१९]ऽयशः[२०] ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ।।१०।५।।

---

**३—आधिदैविकमानसभावानामीश्वराव्ययानुभावितत्वम् ।**

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ।।१०।६।।

---

**४—ईश्वरयोगज्ञानमाहात्म्यम् ।**

एतां विभूतिं* योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ।।१०।७।।

---

*एतां विभूतिं योगं चेति—दहरोत्तरयोर्भावयोः संसर्गो द्विविधः—योगो विभूतिश्चेति । उत्तरप्रवृक्तत्वेन दहरेऽनुग्रहो योगः । अप्रवृक्तस्य दहरेऽनुग्रहो विभूतिः ।।१।। तुषारस्यागलितस्य जले प्रवेशो विभूतिः । गलितस्य तु योगः ।।२।। सूर्य्यप्रतिबिम्बे सूर्य्यप्रकाशस्य विभूतिः । प्रतिविम्बस्य विलीनस्य

**५—ईश्वरसाक्षात्कारौपयिकबुद्धियोगप्राप्त्युपायाः ।**

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ।।१०।८।।
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ।।१०।९।।
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।।१०।१०।।
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ।।१०।११।।

---

**६—ईश्वराव्ययदिव्यविभूतिजिज्ञासा ।**

**अर्जुन उवाच**

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ।।१०।१२।।
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ।।१०।१३।।
सर्वमेतदृतं मन्ये यन्मां वदसि केशव !
न हि ते भगवन् ! व्यक्तिं विदुर्देवा न दानवाः ।।१०।१४।।
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ! ।
भूतभावन भूतेश देवदेव जगत्पते ! ।।१०।१५।।
वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ।।१०।१६।।

---

सूर्य्यप्रकाशे योगः ।।३।। अग्नियोगादपां द्रवीभावः। अग्निविभूतेरपां संतप्तत्वम् ।।४।। अपां योगात्तन्दुलस्यौदनत्वम् । अपां विभूतेस्तन्दुलस्यार्द्रत्वम् ।।५।। कस्तूरीकेसरकर्पूरप्रसूनादिषु गन्धविशेषाणां योगाः। वायौ तु तेषां विभूतिः।।६।। पुष्परसानां पुष्पेषु भिन्ना योगाः। तेषां मधुमक्षिकामधुनि पुनरेको योगः। धात्रीमुरब्बायां मधुनो योगश्च विभूतिश्च ।।।७।। सूर्य्यप्रतिबिम्बे सूर्य्यबिम्बे च तेजसो योगः। प्रतिबिम्बस्य जलदर्पणनेत्रादौ विभूतिः ।।८।। मर्द्दितविकृते लोष्टे बलयोगः । प्रक्षिप्ते लोष्टे बलविभूतिः ।।९।। वस्त्रे सुधाचूर्णादौ श्वैत्यस्य योगः । सुधाचूर्णोपरञ्जितभित्तौ श्वैत्यविभूतिः ।।१०।। गृहादिशिल्पकलारचनायां बुद्धियोगः। गृहादिशिल्पनिर्म्माणक्रमसमालोचनायां बुद्धिविभूतिः ।।११।। स्वधा योगः। स्वाहा विभूतिः ।।१२।। अन्तर्यामो योगः। बहिर्य्यामो विभूतिः ।।१३।। स्वरूपधर्म्मो योगः। आश्रितधर्म्मो विभूतिः ।।१४।। बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः—इत्यादिर्योगोऽव्ययस्य । भूतानामादिमध्यान्तव्यापी अव्ययो विभूतिः।।१५।। आदित्यान महं विष्णुः, मरीचिर्मरुताम्; इन्द्रियाणां मन इत्यादिरधिष्ठानाभिव्यापी प्रधानोऽधिष्ठाता विभूतिः ।।१६।।

रससामान्यस्य अप्सामान्ये सामान्यभावेनावस्थानं विभूतिः ।
रसस्य अप्सु सर्वेतरवैलक्षण्येनावस्थानं विशेषसंयोगः ।।१७।।

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन् ! मया ॥१०।१७॥
विस्तरेणात्मनो योगं विभूतिं च जनार्दन ! ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१०।१८॥

**७—ईश्वराव्ययदिव्यविभूतीनां [७२]द्वासप्ततिरुदाहरणानि ।**

**श्रीभगवानुवाच**

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ ! नास्त्यन्तो विस्तरस्य मे ॥१०।१९॥
अहमात्मा[१] गुडाकेश ! सर्वभूताशयस्थितः ।
अहमादिश्च[२] मध्यं च भूतानामन्त एव च ॥१०।२०॥
आदित्यानामहं विष्णु[३]र्ज्योतिषां रवि[४]रंशुमान् ।
मरीचि[५]र्मरुतामस्मि नक्षत्राणामहं शशी[६] ॥१०।२१॥
वेदानां साम[७]वेदोऽस्मि देवानामस्मि वासवः[८] ।
इन्द्रियाणां मन[९]श्चास्मि भूतानामस्मि चेतना[१०] ॥१०।२२॥
रुद्राणां शङ्कर[११]श्चास्मि वित्तेशो[१२]यक्षरक्षसाम् ।
वसूनां पावक[१३]श्चास्मि मेरुः[१४] शिखरिणामहम् ॥१०।२३॥
पुरोधसां च मुख्यं मां विद्धि पार्थ ! बृहस्पतिम्[१५] ॥
सेनानीनामहं स्कन्दः[१६] सरसामस्मि सागरः[१७] ॥१०।२४॥
महर्षीणां भृगुरहं[१८] गिरामस्म्येकमक्षरम्[१९] ।
यज्ञानां जप[२०]यज्ञोऽस्मि स्थावराणां हिमालयः[२१] ॥१०।२५॥
अश्वत्थः[२२] सर्ववृक्षाणां देवर्षीणां च नारदः[२३] ।
गन्धर्वाणां चित्ररथः[२४] सिद्धानां कपिलो[२५]मुनिः ॥१०।२६॥
उच्चैःश्रव[२६]समश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं[२७] गजेन्द्राणां नराणां च नराधिपम्[२८] ॥१०।२७॥
आयुधानामहं वज्रं[२९] धेनूनामस्मि कामधुक्[३०] ।
प्रजनश्चास्मि कन्दर्पः[३१] सर्पाणामस्मि वासुकिः[३२] ॥१०।२८॥
अनन्त[३३]श्चास्मि नागानां वरुणो[३४] यादसामहम् ।
पितॄणामर्यमा[३५] चास्मि यमः[३६] संयमतामहम् ॥१०।२९॥
प्रह्लाद[३७]श्चास्मि दैत्यानां कालः[३८] कलयतामहम् ।
मृगाणां च मृगेन्द्रो[३९]ऽहं वैनतेय[४०]श्च पक्षिणाम् ॥१०।३०॥
पवनः[४१] पवतामस्मि रामः[४२] शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि[४३] स्रोतसामस्मि जाह्नवी[४४] ॥१०।३१॥
सर्गाणामादिरन्तश्च[४५] मध्यं चैवाहमर्जुन ! ।
अध्यात्मविद्या[४६] विद्यानां वादः[४७] प्रवदतामहम् ॥३२॥
अक्षराणामकारोऽस्मि[४८] द्वन्द्वः[४९] सामासिकस्य च ।
अहमेवाक्षयः[५०] कालो धाताहं[५१] विश्वतोमुखः ॥१०।३३॥
मृत्युः[५२] सर्वहरश्चाहमुद्भवश्च[५३] भविष्यताम् ।
कीर्त्तिः श्रीर्वाक्[५४] च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥१०।३४॥

बृहत्साम[५५] तथा साम्नां गायत्री[५६] छन्दसामहम् ।
मासानां मार्गशीर्षो[५७]ऽहमृतूनां कुसुमाकरः[५८] ॥१०।३५॥
द्यूतं[५९] छलयतामस्मि तेज[६०]स्तेजस्विनामहम् ।
जयोऽस्मि[६१] व्यवसायोऽस्मि[६२]सत्त्वं[६३] सत्त्ववतामहम् ॥१०।३६॥
वृष्णीनां वासुदेवो[६४]ऽस्मि पाण्डवानां धनञ्जयः[६५] ॥
मुनीनामप्यहं व्यासः[६६] कवीनामुशना[६७] कविः ॥१०।३७॥
दण्डो[६८] दमयतामस्मि नीतिरस्मि[६९] जिगीषताम् ।
मौनं[७०] चैवास्मि गुह्यानां ज्ञानं[७१] ज्ञानवतामहम् ॥१०।३८॥
यच्चापि सर्वभूतानां बीजं[७२] तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥१०।३९॥
नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप !
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥१०।४०॥
यद् यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥१०।४१॥
अथवा बहुनैतेन किं ज्ञातेन तवार्जुन !
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥१०।४२॥

**इति दशमोऽध्यायः ॥**

---

### ८—अर्जुनस्य ईश्वरवैश्वरूप्यदर्शनाकाङ्क्षा ।

**अर्जुन उवाच**

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत् त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥११।१॥
भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष ! माहात्म्यमपि चाव्ययम् ॥११।२॥
एवमेतद् यथात्थ त्वमात्मानं परमेश्वर ! ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ! ॥११।३॥
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ! ।
योगेश्वर ! ततो मे त्वं दर्शयात्मानमव्ययम् ॥११।४॥

---

### ९—योगविद्याप्रभावेण अर्जुनाय विश्वरूपदर्शनोपयोगिदिव्यचक्षुःप्रदानम् ।

**श्रीभगवानुवाच**

पश्य मे पार्थ ! रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानवर्णाकृतीनि च ॥११।५॥
पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ! ॥११।६॥

इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश ! यच्चान्यद् द्रष्टुमिच्छसि ।।११।७।।
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ।।११।८।।

---

**१०––वासुदेवशरीरावच्छिन्नाव्यये योगविद्याप्रभावसंपन्ने ईश्वराव्ययाभेदोपपत्त्या ईश्वरवैश्वरूप्य-प्रदर्शनम् ।**

**सञ्जय उवाच**

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ।।११।९।।
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ।।११।१०।।
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ।।११।११।।
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद् भासस्तस्य महात्मनः ।।११।१२।।
तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ।।११।१३।।
ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ।।११।१४।।

---

**११––अर्जुनकृता ईश्वरस्तुतिः ।**

**अर्जुन उवाच**

पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ।।११।१४।।
अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ।।
नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ! ।।११।१६।।
किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ।।११।१७।।
त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ।।११।१८।।
अनादिमध्यान्तमनन्तवीर्य्यमनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ।।११।१९।।
द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ! ।।११।२०।।

अमी हि त्वां सुरसंघा विशन्ति केचिद् भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ।।११।२१।।
रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसंघा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ।।११।२२।।
रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो ! बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ।।११।२३।।
नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ! ।।११।२४।।
दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसंनिभानि ।
दिशो न जाने न लभे च शर्म्म प्रसीद देवेश जगन्निवास ! ।।११।२५।।
अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसंघैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः ।।११।२६।।
वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ।।११।२७।।
यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ।।११।२८।।
यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ।।११।२९।।
लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ! ।।११।३०।।
आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर ! प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ।।११।३१।।

---

## १२—अर्जुनं प्रति भगवदनुग्रहवाक्यम् ।

### श्रीभगवानुवाच ।

कालोऽस्मि लोकक्षयकृत् प्रवृद्धो लोकान् समाहर्त्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ।।११।३२।।
तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ! ।।११।३३।।
द्रोणं च भीष्मं च जयद्रथं च कर्णं तथाऽन्यानपि योधवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान् ।।११।३४।।

---

## १३—अर्जुनकृता श्रीकृष्णाय अपराधक्षमाप्रार्थना ।

### सञ्जय उवाच

एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ।।
नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ।।११।३५।।

**अर्जुन उवाच**

स्थाने हृषीकेश! तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः ॥११।३६॥
कस्माच्च ते न नमेरन् महात्मन्! गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास! त्वमक्षरं सदसत् तत्परं यत् ॥११।३७॥
त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप! ॥११।३८॥
वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥११।३९॥
नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व! ।
अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥११।४०॥
सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं मया प्रमादात् प्रणयेन वापि ॥११।४१॥
यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत! तत्समक्षं तत् क्षामये त्वामहमप्रमेयम् ॥११।४२॥
पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः ॥११।४३॥
तस्मात् प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥११।४४॥
अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास! ॥११।४५॥
किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन सहस्रबाहो! भव विश्वमूर्त्ते! ॥११।४६॥

---

**१४—पुनरर्जुनं प्रति भगवदनुग्रहवाक्यम् ।**

**श्रीभगवानुवाच**

मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥११।४७॥
न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर! ॥११।४८॥
मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ् ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥११।४९॥

---

**१५—ईश्वरवैश्वरूप्यप्रदर्शनोत्तरं पुनर्मानुषरूपप्रदर्शने अर्जुनाश्वासनार्थं कृष्णार्जुनसंवादः ।**

**सञ्जय उवाच**

इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥११।५०॥

**अर्जुन उवाच**

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ! ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥११।५१॥

**श्रीभगवानुवाच**

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥११।५२॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥११।५३॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ! ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ! ॥११।५४॥
मत्कर्मकृन् मत्परमो मद्भक्तः संगवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ! ॥११।५५॥

**इति एकादशोऽध्यायः ॥**

---

## (३) ईश्वरोपासनोपनिषत्

**१––सगुणेश्वरोपासना––निर्गुणात्मोपासनयोर्विवेकजिज्ञासा ।**

**अर्जुन उवाच**

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥१२।१॥

---

**२––निर्गुणात्मोपासनापेक्षया सगुणेश्वरोपासनायाः श्रेष्ठत्वे भगवत्सम्मतिः ।**

**श्रीभगवानुवाच**

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥१२।२॥

---

**३––ईश्वरव्यतिरेकेण कैवल्यात्मनोऽक्षरस्यानवस्थानादक्षरोपासनाया ईश्वरोपासनावदीश्वरप्रापकत्वेऽपि निर्गुणात्मनि मनोबुद्धिसंचारे क्लेशाधिक्यान्नात्यन्तमपेक्षा ।**

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्य्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥१२।३॥
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥१२।४॥
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥१२।५॥

---

**४––सर्वकर्म्मार्पणरूपेश्वराव्ययोपासनाया अनायासेनाविलम्बेन च परमपुरुषार्थप्रदायित्वात् श्रेष्ठत्वम् ।**

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥१२।६॥
तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि न चिरात् पार्थ ! मय्यावेशितचेतसाम् ॥१२।७॥
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥१२।८॥

---

**५——ईश्वरोपासनानुकल्पचतुर्विधप्रकारेषु-अभ्यास-ज्ञान-ध्यान-फलत्यागेषु उत्तरोत्तरश्रेयस्त्वम् । तत्र ईश्वरज्ञानोपयोगिकर्म्मप्रवणत्वं ज्ञानम् । ईश्वरे परानुरक्तिहेतुकर्म्मप्रवणत्वं ध्यानम् ।**

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यास[1]योगेन ततो मामिच्छाप्तुं धनञ्जय ! ॥१२।९॥
अभ्यासेऽप्यसमर्थोऽसि मत्कर्म[२:३]परमो भव ।
मदर्थमपि कर्म्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥१२।१०॥
अथैतदप्यशक्तोऽसि कर्त्तुं मद्योगमाश्रितः ।
सर्वकर्म्म[४]फलत्यागं ततः कुरु यतात्मवान् ॥१२।११॥
श्रेयो हि ज्ञान[२]मभ्या[१]साज्ज्ञानाद्धयानं[३] विशिष्यते ।
ध्यानात्कर्म[४]फलत्यागस्त्यागाच्छान्तिरनन्तरम्॥१२।१२॥

---

**६——ईश्वरप्रसादोपयोगिनो भक्तिभावनाप्रकाराः ।**

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्म्ममो निरहंकारः समदुःखसुखः क्षमी ॥१२।१३॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः ॥१२।१४॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१२।१५॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥१२।१६॥
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥१२।१७॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥१२।१८॥
तुल्यनिन्दास्तुतिर्म्मौनी संतुष्टो येन केनचित् ।
अनिकेतस्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥१२।१९॥
ये तु धर्म्म्यामृतमिदं यथोक्तं पर्य्युपासते ।
श्रद्धाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥१२।२०॥

**इति द्वादशोऽध्यायः ॥**

---

**इति भगवद्गीतोपनिषदि अस्मिताक्लेशनिवर्तिका ऐश्वर्यबुद्धियोगपरिष्कृता *राजविद्या समाप्ता ।**

( ३ )

---

*ऐश्वर्य्य——बुद्धचाऽऽराधिकाऽनन्यभक्तिः=राजविद्यारहस्यम् ।
अनन्यभक्तिर्हि तत्राव्यये बुद्धेः प्रवेशाय द्वारमपेक्ष्यते ॥

# अथ आर्षविद्याया धर्मबुद्धियोगेन संस्कार आदिश्यते

प्रकृति-पुरुषयोः, क्षेत्र-क्षेत्रज्ञयोः, ज्ञान-ज्ञेययोरित्येवं द्वन्द्व[१]त्रयस्य विज्ञानम् ।
सत्त्वरजस्तमोलक्षणगुण[२]त्रयविज्ञानम् ।
कर्मब्रह्मभेदादश्वत्थद्वय[३]विज्ञानम् ।
दैवासुरभूतसर्गद्वयभेदात् संपद्[४]द्वयविज्ञानम् ।
नैर्गुण्यनैष्कर्म्यप्रतिपत्तये गुणकर्मद्वयविज्ञानम्[५] ।
अबन्धनकर्मद्वयविज्ञानम्[६] ।

इत्येवं षड्भावनाभिर्विश्वविज्ञानसिद्धिरार्षविद्या नाम ॥ सेयं पुरायुगे ब्रह्मर्षिकुले भूयसा प्रचरति स्म। तामप्येतामनुज्ञादानाय स्वसंमतिं प्रत्याययितुमिह गीतायां भगवानन्वादिशति नवाशीत्यधिकशतश्लोकैः ॥१८९॥

## (१) प्रकृति-पुरुषौ, क्षेत्र-क्षेत्रज्ञौ, ज्ञान-ज्ञेयौ इति षड्विज्ञानोपनिषत

**१—प्रकृति-पुरुषयोः, क्षेत्र-क्षेत्रज्ञयोः, ज्ञान-ज्ञेययोश्च स्वरूपनिरूपणोपक्रमः ।**

**अर्जुनउवाच**

† प्रकृतिं[१] पुरुषं[२] चैव क्षेत्रं[३] क्षेत्रज्ञमेव[४] च ।
एतद्वेदितुमिच्छामि ज्ञानं[५] ज्ञेयं[६] च केशव! ॥१३।१॥

**२—क्षेत्रक्षेत्रज्ञयोः, भूतग्राम-विज्ञानात्मनोः शरीरशारीरकयोश्च विवेकलक्षणं ज्ञानम् ।**

**श्रीभगवानुवाच**

इदं शरीरं कौन्तेय ! **क्षेत्र**मित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः **क्षेत्रज्ञ** इति तद्विदः ॥१३।२॥
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्र-क्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥१३।३॥

---

† इदं पद्यं बहवो व्याख्याकारा न निबध्नन्ति। महाभारते तु दृश्यते ।
प्रकरणान्तरारम्भे उत्थानिका योग्येतीदमत्र निवेशितम् ।

ये त्विदं न पठन्ति, तैः षोडशेऽध्याये पञ्चमश्लोकानन्तरम् "द्वौ भूतसर्गौ" इत्यादि पद्यं पठनीयम् । तेन संख्याभेदो नास्ति ।

**३—अष्टपुरीलक्षण—क्षेत्रनिरुक्तिः ।**

तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत् समासेन मे शृणु ॥१३।४॥
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥१३।५॥
†महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥१३।६॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत् **क्षेत्रं** समासेन सविकारमुदाहृतम् ॥१३।७॥

---

**४—विंशतिलक्षण—ज्ञाननिरुक्तिः ।**
**क्षेत्रक्षेत्रज्ञविवेकज्ञानजनितानीमानि विंशतिर्लक्षणानि ।**

*[1]अमानित्वमद[2]म्भित्व[3]महिंसा[4]क्षान्ति[5]रार्जवम् ।
[6]आचार्य्योपासनं [7]शौचं [8]स्थैर्य्य[9]मात्मविनिग्रहः ॥१३।८॥
[10]इन्द्रियार्थेषु वैराग्य[11]मनहंकार एव च ।
[12]जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥१३।९॥
[13]असक्ति[14]रनभिष्वङ्गः पुत्रदारगृहादिषु ।
[15]नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥१३।१०॥
[16]मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
[17]विविक्तदेशसेवित्व[18]मरतिर्जनसंसदि ॥१३।११॥
[19]अध्यात्मज्ञाननित्यत्वं [20]तत्त्वज्ञानार्थदर्शनम् ।
एतज्**ज्ञान**मितिप्रोक्तमज्ञानं यदतोऽन्यथा ॥१३।१२॥

---

| | | | | | | |
|---|---|---|---|---|---|---|
| † ५ | **महाभूतानि ..........** | **१** | **१** | ***अमानित्वम्** | **११** | **आत्मविनिग्रहः** |
| ५ | **कर्म्मेन्द्रियाणि .........** | **२** | **२** | **अदम्भित्वम्** | **१२** | **आत्मानन्यभक्तिः** |
| ५ | **ज्ञानेन्द्रियाणि .........** | **३** | **३** | **अहिंसा** | **१३** | **अध्यात्मज्ञाननित्यता** |
| ५ | **इन्द्रियार्थाः ..........** | **४** | **४** | **अनहंकारः** | **१४** | **तत्त्वज्ञानार्थदृष्टिः** |
| ४ | **अव्यक्तमहंकारो बुद्धिर्मनः** | **५** | **५** | **अनासक्तिः** | **१५** | **इष्टानिष्टादिसमचित्तत्वम्** |
| ५ | **इच्छाद्वेषौ सुखदुःखे धृतिः** | **६** | **६** | **अनभिष्वङ्गः** | **१६** | **आचार्य्योपासनम्** |
| १ | **संघातः ..............** | **७** | **७** | **संसद्यरतिः** | **१७** | **स्थैर्य्यम्** |
| १ | **चेतना ..............** | **८** | **८** | **इन्द्रियार्थवैराग्यम्** | **१८** | **आर्जवम्** |
| | | | **९** | **द्वन्द्वेषु दोषदृष्टिः** | **१९** | **क्षान्तिः** |
| | | | **१०** | **विविक्तदेशसेवित्वम्** | **२०** | **शौचम्** |
| **३१** | **अष्टपुर्य्यः क्षेत्रम् । .....** | **८** | | | **२०** | |

**५--सर्वाधारभूत-परब्रह्माव्ययपुरुषलक्षण-ज्ञेयनिरुक्तिः ।**

ज्ञेयं* यत्तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते ।।१३।१३।।
सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।।१३।१४।।
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ।।१३।१५।।
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ।।१३।१५।।
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ।।१३।१७।।
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ।।१३।१८।।
इति **क्षेत्रं** तथा **ज्ञानं ज्ञेयं** चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ।।१३।१९।।

---

**६--सर्वविधविकारग्रामसमुद्भावकत्रैगुण्यलक्षणप्रकृतिसंज्ञस्य कर्म्मणः, सर्वविधविकारगुणग्रामाधारभूतनिष्क्रियनैर्गुण्यलक्षणपुरुषसंज्ञस्य ब्रह्मणश्च परस्परोपयोगाभिज्ञानानि ।**

**प्रकृतिं पुरुषं** चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ।।१३।२०।।
कार्य्यकारणकर्तृत्वे हेतुः **प्रकृतिरु**च्यते ।
**पुरुषः** सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ।।१३।२१।।
**पुरुषः प्रकृतिस्थो** हि भुङक्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ।।१३।२२।।
**उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः** परः ।।१३।२३
य एवं वेत्ति **पुरुषं प्रकृतिं** च गुणैः सह ।
सर्वथा वर्त्तमानोऽपि न स भूयोऽभिजायते ।।१३।२४।।

---

| | | | | |
|---|---|---|---|---|
| * १--प्रकृतिः | -- | कर्त्री | = | त्रैगुण्यम् |
| २--पुरुषः | -- | भोक्ता | = | भूतात्मा |
| ३--क्षेत्रम् | -- | शरीरम् | = | अष्टपुर्य्यः |
| ४--क्षेत्रज्ञः | -- | शरीरी | = | विज्ञानात्मा |
| ५--ज्ञानम् | -- | शरीर--शारीरकयोर्विवेकः | | |
| ६--ज्ञेयम् | -- | सदसत् परं ब्रह्म-अव्ययम् । | | |

**७—मृत्युनिस्तारक-पुरुषोपासनाभेदाः ।**

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥१३।२५॥
अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥१३।२६॥

---

**८—सत्त्वस्य प्राणिनः क्षेत्र-क्षेत्रज्ञसंयोगोपाधिकत्वम् ।**

यावत्संजायते किंचित् सत्त्वं स्थावरजङ्गमम् ।
**क्षेत्र-क्षेत्रज्ञ**संयोगात्तद्विद्धि भरतर्षभ ॥१३।२७॥

---

**९—क्षेत्रस्थितस्य परमेश्वरस्य[१], ईश्वरस्य[२], परमात्मनो[३], विज्ञानात्मन[४]श्च क्षेत्रात् पृथक्त्वेन दर्शनमात्मसाक्षात्कारलक्षणः पुरुषार्थः ।**

समं सर्वेषु भूतेषु तिष्ठन्तं [१]**परमेश्वरम्***।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥१३।२८॥
समं पश्यन् हि सर्वत्र समवस्थित**मीश्वरम्**[२] ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥१३।२९॥
प्रकृत्यैव च कर्म्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथा**त्मान**[४]**मकर्तारं** स पश्यति ॥१३।३०॥
यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥१३।३१॥
अनादित्वान्निर्गुणत्वात् **परमा**[३]**त्मायमव्ययः** ।
शरीरस्थोऽपि कौन्तेय ! न करोति न लिप्यते ॥१३।३२॥
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥१३।३३॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं **क्षेत्री**[४] तथा कृत्स्नं प्रकाशयति भारत ! ॥१३।३४॥
**क्षेत्र-क्षेत्रज्ञयो**रेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥१३।३५॥

**इति त्रयोदशोध्यायः ॥१३॥**

---

*आनन्त्यविश्वाधिष्ठाता परमेश्वरः । अधिदैवतविश्वाधिष्ठाता अश्वत्थैकवल्शाध्यक्ष ईश्वरः । शरीरोपाधिको विशुद्धो जीवात्मा परमात्मा । शरीरविशिष्टस्तु सगुणो जीवात्मा भूतभृदात्मा ॥ अभिन्ना अप्येते चत्वारो विवक्षावशाच्चतुर्धा पृथक्कृत्येह व्याख्याताः । ते चैते ब्रह्मविज्ञाने सुविशदं व्याख्याता द्रष्टव्याः ॥

## (२) सत्त्वरजस्तमोलक्षणगुणत्रयोपनिषत्

**१--क्षेत्रज्ञे विशेषाधायकस्य गुणत्रयसमष्टिरूपस्य महतो ब्रह्मणः सर्वभूतयोनित्वम् ।**

**श्रीभगवानुवाच**

परं भूयः प्रवक्ष्यामि ज्ञानानां **ज्ञान**मुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥१४।१॥
इदं **ज्ञान**मुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥१४।२॥
मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ! ॥१४।३॥
सर्वयोनिषु कौन्तेय ! मूर्तयः संभवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥१४।४॥

---

**२--गुणत्रयस्वरूपनिरूपणम् ।**

***सत्त्वं रजस्तम** इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥१४।५॥
तत्र सत्त्वं निर्म्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ! ॥१४।६॥
रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय ! कर्म्मसङ्गेन देहिनम् ॥१४।७॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ! ॥१४।८॥
सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत ! ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥१४।९॥
रजस्तमश्चाभिभूय सत्त्वं भवति भारत ! ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥१४।१०॥
सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥१४।११॥
लोभः प्रवृत्तिरारम्भः कर्म्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ! ॥१४।१२॥
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ! ॥१४।१३॥
यदा सत्त्वे प्रवृद्धे तु प्रलयं **याति** देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥१४।१४॥

---

*सत्त्वं रजस्तमश्चेति--सत्त्वं प्रकाशकं सुखसङ्गेन ज्ञानसङ्गेनात्मानं बध्नाति। रजो रागमयं तृष्णासङ्गेन कर्म्मसङ्गेनात्मानं बध्नाति । तमो मोहनं प्रमादालस्यनिद्राभिरात्मानं बध्नाति ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१४।१५॥
कर्म्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१४।१६॥
सत्त्वात् संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१४।१७॥
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥१४।१८॥
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१४।१९॥
गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥१४।२०॥

---

**३—गुणत्रयातीतस्य विदेहात्मनो लक्षणम् ।**

**अर्जुन उवाच**

कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ! ।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥१४।२१॥

**श्रीभगवानुवाच**

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ! ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥१४।२२॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठाति नेङ्गते ॥१४।२३॥
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥१४।२४॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥१४।२५॥

---

**४—जीवाव्ययकैवल्योपासनया ईश्वराव्ययकैवल्यसायुज्यसिद्धौ सर्वगुणात्ययाद् गुणातीतत्वसिद्धिः ।**

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥१४।२६॥

---

**५—गुणत्रयातीतस्य ईश्वराव्ययस्य सर्वजीवसम्बन्धि-पुरुषत्रय-परात्पर-निर्विशेषसाधारणप्रतिष्ठात्वम् ।**

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्म्मस्य सुखस्यैकान्तिकस्य च ॥१४।२७॥

**इति चतुर्दशोऽध्यायः ॥१४॥**

---

## (३) अश्वत्थोपनिषत्

**१—ब्रह्मकर्म्मणोरपृथक्त्वेन ब्रह्माश्वत्थकर्म्माश्वत्थयोरपृथग्ग्रहणात् त्रैगुण्योपपन्नकर्म्माश्वत्थनिरासपूर्वकं ब्रह्माश्वत्थे प्रपत्त्युपदेशः ।**

**श्रीभगवानुवाच**

ऊर्ध्वमूलमधःशाखमश्व*त्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ।।१५।१।।

---

*अश्वत्थं प्राहुरव्ययमिति—

अश्वत्थो द्विविधः—ब्रह्माश्वत्थः कर्म्माश्वत्थश्च । तदत्र प्रकरणवशाद् ब्रह्माश्वत्थं तावन्निरूपयामि ।

ऊर्ध्वमूलोऽवाक्शाखः एषोऽश्वत्थः सनातनः ।
तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।
तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन (कठोपनिषदि)

एतावता—अमृतं ब्रह्म शुक्रं चेति त्रितयमेकोऽश्वत्थः । तत्र त्रिपुरुषः पुरुषोऽमृतम् । प्राणाः, आपः, वाग्, अन्नम्, अन्नादश्चेति पञ्चकलप्रकृतिर्ब्रह्म । वागापोऽग्निः, अग्निरापो वागिति मर्त्यामृतभेदतः षट् शुक्राणि । तदेतच्छुक्रं प्रकृतिविकृतिः । अत्रेदं बोध्यम्—ईश्वरस्तावद् वृक्षात्मना भाव्यमान उपास्यते, तथा च श्रूयते—

"तस्मात्परं नापरमस्ति किंचित् तस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ।। इति ।।

स चोपासकविवक्षावशात् त्रेधाऽभिज्ञायते—ब्रह्मा चेदुदुम्बरः । विष्णुश्चेद् अश्वत्थः । शिवश्चेद्-वट इति । अथवा अश्वत्थ एव सर्वत्र । तथा चाभियुक्ता आहुः—

क्वचिन्मायाबलोद्रेकादसीमेऽस्मिन् परात्परे ।
मायावच्छेदतो मायी कल्पते पुरुषोऽव्ययः ।।१।।
मायामितः स पुरुषो विष्टब्धो दिवि तिष्ठति ।
एकत्र वृक्षवत् तेन परिपूर्णमिदं जगत् ।।२।।
नातोऽणीयो न वा ज्यायो न परं नापरं ततः ।
एकेन तेन वृक्षेण जगद् व्याप्तं समन्ततः ।।३।।
सोऽव्ययोऽक्षरभेदेन त्रिधा कृत उपास्यते ।
स ब्रह्मा वा, स विष्णुर्वा, शंकरो वा स भिन्नवत् ।।४।।
उदुम्बरद्रुमो ब्रह्मा विष्णुरश्वत्थपादपः ।
वटो जटी पारिजातः शंकरः स उपास्यते ।।५।।
अथवाऽश्वत्थ एवैको ब्रह्मा वा, शंकरोऽपि वा ।
उत्थाप्यैकं पदं सृष्टचै त्रिपात् तिष्ठति सोऽश्ववत् ।।६।।
"त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः ।
ततो विष्वङ व्यक्रामत् साशनानशने अभि ।।" इति ।।

सहस्रबल्शोऽयमश्वत्थो विज्ञायते। तस्यैतदास्माकीनपृथिव्युपलक्षितेयमेका बल्शा पञ्चपुण्डीराऽन्यत्र भूयसा व्याख्याता संक्षेपादिहापि प्रदर्श्यते । अमृत-ब्रह्म-शुक्रमयी हीयमेकैका बल्शा भवति ।

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि
कर्म्मानुबन्धीनि मनुष्यलोके ॥१५।२॥

---

(१) तत्र तावत् स्वयंभूः प्रजापतिः प्रथमः पुण्डीरः—
तस्य ब्रह्माऽक्षरः पुरुष आत्मा । तस्य प्रत्ययः प्रतिष्ठालक्षणा स्थितिः । तस्य प्राणप्रकृतिको लोको वाक् । वाय्वाकाशौ यजुर्वाक् । खं ब्रह्म । तत्र लोके वाक्प्राणौ सोमाग्नी कं ब्रह्म । यजुर्वाग् ब्रह्माऽऽवपनम् । वाक्प्राणयोर्वाक् सोमोऽन्नं प्राणोऽन्नादः । खं शुद्धं ब्रह्मान्यत् । कं देवौ ब्रह्मान्यत् ॥१॥

(२) अथ परमेष्ठी प्रजापतिर्द्वितीयः पुण्डीरः—
तस्य विष्णुरक्षरः पुरुष आत्मा । तस्य प्रत्ययो यज्ञलक्षणा—अन्तर्गतिः । तस्य अप्प्रकृतिको लोको गौः । स वाग्लोकेन परिश्रितः । भृग्वङ्गिरसौ आपो गौः खं ब्रह्म । तत्र भृगुः सोमः, अङ्गिरा अग्निः । तत्र लोके रयि-प्राणौ सोमाग्नी कं ब्रह्म ॥२॥ आपो गौर्ब्रह्मावपनम् ।
रयिप्राणयोर्मूर्तं रयिः सोमोऽन्नम् । प्राणोऽमूर्तोऽग्निरन्नादः । खं शुद्धं ब्रह्मान्यत् ॥२॥

(३) अथ हिरण्यगर्भः प्रजापतिस्तृतीयः पुण्डीरः—
तस्येन्द्रोऽक्षरः पुरुष आत्मा । तस्य प्रत्ययोऽवयजनलक्षणा बहिर्गतिः । तस्य वाक्प्रकृतिको लोको द्यौः । स वाग्लोकाभ्यां परिश्रितः । तत्र लोके बुद्धिप्राणौ कं ब्रह्म । वाग्ज्योतिर्ब्रह्मावपनम् । तेजःप्राणयोस्तेजः सोमोऽन्नम् । प्राणोऽग्निरन्नादः । खं शुद्धं ब्रह्मान्यत् । कं देवौ ब्रह्मान्यत् ॥३॥

(४) अथ चन्द्रमाः प्रजापतिश्चतुर्थः पुण्डीरः—
तस्य सोमोऽक्षरः पुरुष आत्मा । तस्य प्रत्ययः संकोचलक्षणा अन्तर्गतिः । तस्य अन्नप्रकृतिको लोकोऽन्तरिक्षम् । स चापिण्डत्वादसत्यत्वादपरिश्रितः । अब्वाय्वन्नलक्षणैः प्राणैः पर्य्याप्तमिदमन्तरिक्षम् । तत्र प्रज्ञाप्राणौ कं ब्रह्म । अन्तरिक्षं विद्युद्ब्रह्मावपनम् । प्रज्ञाप्राणयोः प्रज्ञा सोमोऽन्नम् । प्राणोऽग्निरन्नादः । खं शुद्धं ब्रह्मान्यत् । कं देवौ ब्रह्मान्यत् ॥४॥

(५) अथाग्निः प्रजापतिः पञ्चमः पुण्डीरः—
तस्याग्निरक्षरः पुरुष आत्मा । तस्य प्रत्ययो विकासलक्षणा बहिर्गतिः । तस्य अन्नादप्रकृतिको लोकः पृथिवी । स चान्तरिक्ष-द्यु-गो-वाग्लोकैः परिश्रितः । तत्राक्षराग्निरमृतम्[1] । अन्नादाग्नि[2]र्ब्रह्म । य ऋतस्य प्रथमजः स सत्याग्निः[3] शुक्रम् । अथ याजुषो ब्रह्माग्निः, आङ्गिरसो देवाग्निः । अथ द्विविधो वागग्निः—चित्यश्चितेनिधेयश्च । तत्रायं चित्याग्निः पृथ्वीपिण्डः । तदेतावद् ब्रह्मसत्यम् ॥
चित्याग्निर्ब्रह्मावपनम् । भूतप्राणयोर्भूतं सोमोऽन्नम् । प्राणोऽग्निरन्नादः । खं शुद्धं ब्रह्मान्यत् । कं देवौ ब्रह्मान्यत् ॥

अथ चितेनिधेयाग्निप्रकृतिको देवप्राणाभ्यां सोमाग्निरूपाभ्यां कृतरूपो ब्रह्मलोकः पुरुषः । तत्र–अग्निः–वायुः–इन्द्रः–इति त्रयो देवाः सन्निविशन्ते । ते चैतेऽधिदैवतं सर्वभूतान्तरात्मनि—वैश्वानरो हिरण्यगर्भः सर्वज्ञ इति संज्ञायन्ते । अध्यात्मं तु भूतात्मनि–वैश्वानरः–तैजसः–प्राज्ञ इत्युच्यन्ते । प्राणोदानौ व्यानः-अपानसमानौ चेति । तदेतावद्देवाग्निमयं देवसत्यम् ॥

न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण दृढेन छित्त्वा ॥१५।३॥
ततः पदं तत् परिमार्गितव्यं
यस्मिन् गता न निवर्त्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥१५।४॥

---

**२—गुणकर्म्मप्रपञ्चोपाधिशून्यस्य ब्रह्माश्वत्थरूपाव्ययस्य साक्षात्कारोपायः ।**

निर्म्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥१५।५॥
न तद् भासयते सूर्य्यो न शशाङ्को न पावकः ।
यद् गत्वा न निवर्त्तन्ते तद्धा[1]म परमं मम ॥१५।६॥

**३—ईश्वरात्मलक्षणपरमाव्ययस्यैव आध्यात्मिकत्वौपाधिकजीवाव्ययत्वोपपत्तिः ।**

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥१५।७॥
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥१५।८॥

---

**४—कर्म्माश्वत्थापृथग्भूतस्य ब्रह्माश्वत्थपरमाव्ययस्य जीवाव्ययत्वोपपत्तौ तदक्षरानुगतमहद्गुण-योगाद् भोक्तृत्वसिद्धिः ।**

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥१५।९॥
उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥१५।१०॥
यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥१५।११॥

---

[1]तद्धाम परमं ममेति—
तां वा वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥ऋ०।
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततम् ॥ऋ०॥

**५—गुणत्रयोपाधिभिन्नान् नानायोन्याकारान् महद्विशेषानधितिष्ठतस्तस्यैकस्यैवाश्वत्थाव्ययस्य विभिन्ननामरूपगुणकर्म्मग्राहित्वम् ।**

यदादित्यगतं तेजो जगद् भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।।१५।१२।।
गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ।।१५।१३।।
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ।।१५।१४।।

---

**६—एकस्यैवाश्वत्थाव्ययस्य प्रतिजीवशरीरं भेदेनोपलब्धावपि औपाधिकभेदस्य तुच्छतया सर्वेषां जीवाव्ययानां परमाव्ययानतिरेकादैकात्म्यम् ।**

सर्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ।।१५।१५।।

---

**७—एकस्यैवाश्वत्थपरमाव्ययस्य प्रत्यर्थं कर्म्मभेदप्रयोजकगुणत्रयोपाधिभिन्नाभ्यां क्षराक्षरसंज्ञाभ्यां महत्प्रकृतिरूपाभ्यां भेदोपचारोपपत्तिः ।**

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।१५।१६।।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ।।१५।१७।।
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।१५।१८।।
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद् भजति मां सर्वभावेन भारत ! ।।१५।१९।।
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ! ।
एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ! ।।१५।२०।।

**इति पञ्चदशोऽध्यायः ।।१५।।**

---

## (४) दैवासुर-भूतसर्गोपनिषत् ।

१—जन्मसिद्धनैसर्गिकदैवासुरसंपत्तिनिबन्धनाः स्वभावसिद्धसहजगुणकर्म्मानुबन्धाः ।

श्रीभगवानुवाच

अभयं[1] सत्त्वसंशुद्धि[2]र्ज्ञानयोगव्यवस्थितिः[3] ।
दानं[4] दमश्च[5] यज्ञश्च[6] स्वाध्याय[7]स्तप[8] आर्जवम्[9] ॥१६।१॥
अहिंसा[10] सत्यम[11]क्रोध[12]स्त्यागः[13] शान्ति[14]रपैशुनम्[15] ।
दया[16] भूतेष्वलोलुप्त्वं[17]मार्दवं[18] ह्री[19]रचापलम्[20] ॥१६।२॥
तेजः[21] क्षमा[22] धृतिः[23] शौच[24]मद्रोहो[25] नातिमानिता[26] ।
भवन्ति संपदं दैवी(१)मभिजातस्य भारत ! ॥१६।३॥
दम्भो[1] दर्प्पो[2]ऽभिमानश्च[3] क्रोधः[4] पारुष्य[5]मेव च ।
अज्ञानं[6] चाभिजातस्य पार्थ ! संपदमासुरीम् ॥१६।४॥
दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ! ॥१६।५॥
'द्वौ* भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ ! मे शृणु ॥'१॥

---

(१)

| दैवसंपत्तिलक्षणानि | | | | | आसुरसंपत्ति-लक्षणानि |
|---|---|---|---|---|---|
| अभयम्<br>सत्वसंशुद्धिः<br>ज्ञानयोगनिष्ठा<br>दानम्<br>दमः<br>० | यज्ञः<br>स्वाध्यायः<br>तपः<br>आर्जवम्<br>अहिंसा<br>० | सत्यम्<br>अक्रोधः<br>त्यागः<br>शान्तिः<br>अपैशुनम्<br>० | भूतेषु दया<br>निर्लोभत्वम्<br>मार्दवम्<br>लज्जा<br>अचापलम्<br>० | तेजः<br>क्षमा<br>धृतिः<br>शौचम्<br>अद्रोहः<br>अनतिमानः | दम्भः<br>दर्पः<br>अभिमानः<br>क्रोधः<br>पारुष्यम्<br>अज्ञानम् |

* पद्यमिदं बहुषु पुस्तकेषु दृश्यते । परं दैवासुरसंपदोः पूर्वमेव प्रक्रान्तत्त्वान्मध्ये प्रक्रमोचिता प्रतिज्ञा न योग्येति सप्तशताधिकसंख्यापत्तिभिया नेदमत्र परिगणितम् । ये त्विदं पठन्ति; तैः त्रयोदशाध्यायारम्भे "प्रकृतिं पुरुषं चैव" इत्याद्यर्जुनवाक्यं न पाठ्यमिति न संख्यातिरेकः ।

**२––दैवासुरभेदाद् द्विविधे भूतसर्गे आसुरसर्गानुगतानि विद्यानिरपेक्षाणि गुणकर्म्माणि ।**

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥१६।६॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥१६।७॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्म्माणः क्षयाय जगतोऽहिताः ॥१६।८॥
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद् गृहीत्वाऽसद्ग्राहान् प्रवर्त्तन्ते ऽशुचिव्रताः ॥१६।९॥
चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥१६।१०॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥१६।११॥
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥१६।१२॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥१६।१३॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥१६।१४॥
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥१६।१५॥
आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥१६।१६॥
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥१६।१७॥
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१६।१८॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमां गतिम् ॥१६।१९॥

---

**३––आसुरसंपन्मूलकानां कामक्रोधलोभानां नरकद्वारत्वम् ।**

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥१६।२०॥
एतैर्विमुक्तः कौन्तेय ! तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥१६।२१॥

---

**४--दैवसंपन्मूलकानां विद्यासमुच्चितगुणकर्मणां प्रचारोपपत्तये वेदादिशास्त्रपरिशीलनादेशः ।**

यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥१६।२२॥
तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म्म कर्त्तुमिहार्हसि ॥१६।२३॥

**इति षोडशोऽध्यायः ॥१६॥**

---

# (५) गुणकर्मप्रचयोपनिषत्

( गुणप्रचयोपनिषत् )

१—**सर्वविधव्यवहारात्मकलोकयात्रायां दैवसंपत्त्या सत्त्वगुणस्य, आसुरसंपत्त्या तमोगुणस्य, उभयसंपत्तिसाम्याद्रजोगुणस्यानुषङ्गसंभवाद् गुणत्रयभेदभिन्नदैवासुरयोगमायालक्षणप्रकृत्यभिधाभिन्नानां भूतसर्गाणां कानिचिदुदाहरणानि। तथा च तावद् गुणत्रयनिष्ठाभेदात् श्रद्धात्रैविध्यम्।**

**अर्जुन उवाच**

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ।।१७।१।।

**श्रीभगवानुवाच**

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ।।१७।२।।
सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।।१७।३।।
यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ।।१७।४।।
अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ।।१७।५।।
कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान् विद्धयासुरनिश्चयान् ।।१७।६।।

---

२—**गुणत्रयवृत्तिभेदादाहारत्रैविध्यम् ।**

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ।।१७।७।।
आयुः-सत्त्व-बलारोग्य-सुख-प्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ।।१७।८।।
कट्वम्ल-लवणात्युष्ण-तीक्ष्ण-रूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ।।१७।९।।
यातयामं गतरसं पूति पर्य्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ।।१७।१०।।

---

**३--गुणत्रयवृत्तिभेदाद् यज्ञत्रैविध्यम्।**

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥१७।११॥
अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्।
इज्यते भरतश्रेष्ठ ! तं यज्ञं विद्धि राजसम् ॥१७।१२॥
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥१७।१३॥

---

**४--शरीर-वाङ्मनोरूपाधिष्ठानभेदात् तपस्त्रैविध्यम्।**

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्।
ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते ॥१७।१४॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१७।१५॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१७।१६॥

---

**५--गुणत्रयवृत्तिभेदात् तपस्त्रैविध्यम्।**

श्रद्धया परया तप्तं तपस्तत्* त्रिविधं नरैः।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥१७।१७॥
सत्कारमानपूजार्थं तपो दम्भेन चैव यत्।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१७।१८॥
मूढग्राहेणात्मनो यत् पीडया क्रियते तपः।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥१७।१९॥

---

**६--गुणत्रयवृत्तिभेदाद् दानत्रैविध्यम्।**

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥१७।२०॥
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥१७।२१॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥१७।२२॥

---

*** तप इति--"एतद्वै तप इत्याहुर्यत् स्वं ददाति।" इति हि तपोलक्षणं श्रुतौ श्रूयते॥ स्वमनोयोगदानद्वारा आत्मनोऽन्यत्र कस्मैचित्कालाय परिदानं तपः। योगाभ्यासस्तपः॥**

## (५) ( कर्म्मप्रचयोपनिषत् )

**७--प्रवृत्तकर्मणां निवृत्तकर्म्मणां काम्यकर्म्मणां वा यज्ञतपोदानानामपूर्णत्वसंभावनायां तत्पूर्तये प्रजापतिरूनातिरिक्तयोः प्रतिष्ठेति वेदप्रामाण्यमातिष्ठमानस्येश्वराव्ययस्मरणरूपो ब्रह्मनिर्द्देशस्त्रिविधः कर्तव्यतयोपदिश्यते ।**

ॐ तत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥१७।२३॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥१७।२४॥
तदित्यनभिसन्धाय फलं यज्ञ-तपः-क्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥१७।२५॥
सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।
प्रशस्ते कर्म्मणि तथा सच्छब्दः पार्थ ! युज्यते ॥१७।२६॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म्म चैव तदर्थीयं सदित्येवाभिधीयते ॥१७।२७॥
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ ! न च तत्प्रेत्य नो इह ॥१७।२८॥

**इति सप्तदशोऽध्यायः ॥**

---

**८--कर्म्मसंन्यास-कर्म्मत्यागयोर्विवेकपरिज्ञानम् ।**

अर्जुन उवाच

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश ! पृथक् केशिनिषूदन ! १८।१॥

श्रीभगवानुवाच

काम्यानां कर्म्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्म्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥१८।२॥
त्याज्यं दोषवदित्येके कर्म्म प्राहुर्मनीषिणः ।
यज्ञदानतपः-कर्म्म न त्याज्यमिति चापरे ॥१८।३॥
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ! ।
त्यागो हि पुरुषव्याघ्र ! त्रिविधः संप्रकीर्तितः ॥१८।४॥
यज्ञदानतपःकर्म्म न त्याज्यं कार्य्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥१८।५॥
एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ ! निश्चितं मतमुत्तमम् ॥१८।६॥

---

**९—गुणत्रयवृत्तिभेदात् त्यागत्रैविध्यम् ।**

नियतस्य तु संन्यासः कर्म्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ॥१८।७॥
दुःखमित्येव यत् कर्म्म कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥१८।८॥
कार्य्यमित्येव यत् कर्म्म नियतं क्रियतेऽर्जुन ! ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥१८।९॥
न द्वेष्टयकुशलं कर्म्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥१८।१०॥
न हि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः ।
यस्तु कर्म्मफलत्यागी स त्यागीत्यभिधीयते ॥१८।११॥

---

**१०—कर्म्मयोगिनां कर्म्मत्यागदोषात् कर्म्मफलत्रैविध्यम् ।**
**कर्म्मसंन्यासिनां तु कर्म्मफलोदयाभावः ।**

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्म्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥१८।१२॥

---

**११—सांख्यसिद्धान्ते कर्म्मसिद्धिहेतूनां पाञ्चविध्यम् ।**

पञ्चैतानि* महाबाहो कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्म्मणाम् ॥१८।१३॥
[१]अधिष्ठानं तथा कर्ता[२] करणं[३] च पृथग्विधम् ।
विविधाश्च पृथक् चेष्टा[४] दैवं[५] चैवात्र पञ्चमम् ॥१८।१४॥
शरीरवाङ्मनोभिर्यत् कर्म्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥१८।१५॥
तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्म्मतिः ॥१८।१६॥
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमान् लोकान्न हन्ति न निबद्धयते ॥१८।१७॥

---

**१२—ज्ञानत्रिपुटी-कर्म्मत्रिपुटीरूपाणां षण्णां भावानां कर्म्मस्वरूपनियामकत्वम् ।**

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्म्मचोदना ।
करणं कर्म्म कर्त्तेति त्रिविधः कर्मसंग्रहः ॥१८।१८॥

---

* **कर्म्मसिद्धिहेतवः—**
**[१] दैवम्, [२] कर्ता, [३] करणम्, [४] अधिष्ठानम्, [५] क्रियाः (पुरुषकारः);**
**यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् । एवं पुरुषकारेण विना दैवं न सिद्धयति ।**

**१३—कर्म्मस्वरूपनियामकेषु ज्ञान-कर्म्म-कर्तॄणां प्रत्येकस्य गुणत्रयवृत्तिभेदात् त्रैविध्यम् ।**

ज्ञानं कर्म्म च कर्त्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥१८।१९॥

---

**१४—ज्ञानत्रैविध्यम् ।**

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥१८।२०॥
पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥१८।२१॥
यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥१८।२२॥

---

**१५—कर्म्मत्रैविध्यम् ।**

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म्म यत् तत् सात्त्विकमुच्यते ॥१८।२३॥
यत्तु कामेप्सुना कर्म्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद्राजस-मुदाहृतम् ॥१८॥२४॥
अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म्म यत्तत्तामसमुच्यते ॥१८।२५॥

---

**१६—कर्तृत्रैविध्यम् ।**

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते ॥१८।२६॥
रागी कर्म्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ॥
हर्षशोकान्वितः कर्त्ता राजसः परिकीर्तितः ॥१८।२७॥
अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते ॥१८।२८॥

---

**१७—गुणत्रयवृत्तिभेदाद् बुद्धित्रैविध्यम् ।**

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ! ॥१८।२९॥
प्रवृत्तिं च निवृत्तिं च कार्य्याकार्य्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ ! सात्त्विकी ॥१८।३०॥
यया धर्म्ममधर्म्मं च कार्य्यं चाकार्य्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ ! राजसी ॥१८।३१॥

अधर्म्मं धर्म्ममिति या मन्यते तमसावृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ ! तामसी ॥१८।३२॥

---

**१८—गुणत्रयवृत्तिभेदाद् धृतित्रैविध्यम् ।**

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ ! सात्त्विकी ॥१८॥३३॥
यया तु धर्म्मकामार्थान् धृत्या धारयतेऽर्जुन ! ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ ! राजसी ॥१८।३४॥
यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्म्मेधा धृतिः सा पार्थ ! तामसी ॥१८।३५॥

---

**१९—गुणत्रयवृत्तिभेदात् सुखत्रैविध्यम् ।**

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ! ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥१८।३६॥
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥१८।३७॥
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत् सुखं राजसं स्मृतम् ॥१८।३८॥
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥१८।३९॥

---

**२०—गुणत्रयवृत्तीनां सर्वभावानुगतत्वेनोपसंहारः ।**

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥१८।४०॥

---

७

## (६) अत्याज्यकर्म्मोपनिषत्

*१—अधिकारसिद्ध-सांस्कारिक-दैवासुरसंपत्तिनिबन्धनाः स्वभावसिद्धस्वीयगुणकर्म्मानुबन्धाः ।

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ! ।
कर्म्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ।।१८।४१।।
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म्म स्वभावजम् ।।१८।४२।।
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म्म स्वभावजम् ।।१८।४३।।
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म्म स्वभावजम् ।
परिचर्य्यात्मकं कर्म्म शूद्रस्यापि स्वभावजम् ।।१८।४४।।

---

२—दोषवतामपि स्वकर्म्मणां[१] सहजकर्म्मणां[२] च परित्यागानौचित्यम् ।

स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्म्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ।।१८।४५।।
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।।१८।४६।।
श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात् ।
स्वभावनियतं कर्म्म कुर्वन्नाप्नोति किल्विषम् ।।१८।४७।।
सहजं कर्म्म कौन्तेय ! सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ।।१८।४८।।

---

१—* अधिकारसिद्धसांस्कारिकसंपत्तिनिबन्धनकर्म्माणि ।
२—जन्मसिद्ध-नैसर्गिकसंपत्तिनिबन्धनकर्म्माणि ।

## (७) अनावरणकर्मोपनिषत्

**१——अनासक्तस्य फलवासनाशून्यस्य काम्यकर्मसंन्यासिनः कर्म्मानुष्ठानेऽपि नैष्कर्म्यसिद्धिः ।**

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥१८।४९॥
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय ! निष्ठा ज्ञानस्य या परा ॥१८।५०॥
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥१८।५१॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥११।५२॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्म्ममः शान्तो ब्रह्मभूयाय कल्पते ॥१८।५३॥

---

**२——नैष्कर्म्येण ब्रह्मभूतस्य विदेहावस्थां गतस्य सर्वविधकर्म्माचरणेऽपि सद्योमुक्तिसिद्धया परमाव्यय-पदप्राप्त्यानन्दः ।**

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥१८।५४॥
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्वतः ।
ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम् ॥१८।५५॥
सर्वकर्म्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥१८।५६॥

**इति भगवद्गीतोपनिषदि अभिनिवेशक्लेशनिवर्त्तिका धर्म्मबुद्धियोगपरिष्कृता आर्षविद्या समाप्ता**

( ४ )

**अत्र विद्याचतुष्टयी पूर्णा**

---

# अथ सर्वविधक्लेशनिवर्त्तिकानां चतुर्विधबुद्धियोग-विद्यानामुद्धार उपदिश्यते

प्रतिसत्त्वं जीवेश्वरभेदात् संलग्नात्मद्वैविध्यसिद्धान्ते जन्मसिद्धाधिकारसिद्धदैवासुरसंपत्ति-परिष्कृतप्रकृतिवशीभूतेन जीवात्मना स्वसंलग्नेश्वरशरणागत्या तदेकीभावमागत्यैतन्नियोगवशीभूतेन वर्तितव्यमिति परमादेशः ॥

तत्र चतसृणां विद्यानामेकैकस्या उद्धाराः पृथक् प्रदर्श्यन्ते

## (१) तत्र सारोद्धारोपनिषत्

१—पूर्वाचार्य्यपरम्परासिद्धकर्म्मविद्याचतुष्टयोपदेशानन्तरमन्ते विद्याचतुष्टयनिष्कर्षे विवक्षिते प्रथमस्तावद् वैराग्यबुद्धियोगविद्यानिष्कर्षसिद्धाया जीवाव्ययलक्षणस्वात्मनिर्भरताया आदेशः।

**चेतसा सर्वकर्म्माणि मयि संन्यस्य मत्परः ।**
**बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ (१८।५७)**
**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।**
**अथ चेत् त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ (१८।५८)**

---

२—अथ आर्षविद्यालक्षणचतुर्थविद्योद्धारस्वरूपे धर्म्मबुद्धियोगविद्यानिष्कर्षसिद्धायाः प्रकृतिसिद्धकर्म्मकर्तव्यताया आदेशः ।

**यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।**
**मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ (१८।५९)**

---

३—अथ सिद्धविद्यालक्षणद्वितीयविद्योद्धारस्वरूपे ज्ञानबुद्धियोगविद्यानिष्कर्षसिद्धायाः स्वभावसिद्धस्वकर्म्मप्रवणताया आदेशः ।

**स्वभावजेन कौन्तेय ! निबद्धः स्वेन कर्म्मणा ।**
**कर्तुं नेच्छसि यन् मोहात् करिष्यस्यवशोऽपि तत् ॥ (१८।६०)**

---

४—अथ राजविद्यालक्षणतृतीयविद्योद्धारस्वरूपः पुनरैश्वर्य्यबुद्धियोगनिष्कर्षसिद्धाया जीवाव्ययात्मसंलग्नेश्वराव्ययलक्षणान्तरात्मप्रेरितकर्म्मकर्त्तव्यताया आदेशः ।

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ (१८।६१)**

तमेव शरणं गच्छ सर्वभावेन भारत ! ।
तत्प्रसादात् परां शान्ति स्थानं प्राप्स्यसि शाश्वतम् ॥ (१८।६२)
इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ (१८।६३)

---

## (२) अथ उद्धारोद्धारोपनिषत्

१—राजर्षिविद्योद्धारस्वरूपो गूढोत्माव्ययपुरुषैकनिष्ठतादेशः ।

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥१८।६४॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥१८।६५॥
सर्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।१८।६६॥

इति सर्वविधक्लेशनिवर्तिकानां चतुर्विधबुद्धियोगविद्यानामुद्धारलक्षणो विद्योपसंहारः समाप्तः

---

## (२) इदं गीताविज्ञानमयोग्येभ्यो ग्रहीतुमसमर्थेभ्योऽपात्रेभ्यश्च न वक्तव्यम् ।

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥१८।६७॥

# फलश्रुतिः

## (३) अथ गीताफलश्रुत्युपनिषत्

(१) भगवद्गीतार्थभावनाप्रवणत्वप्रशंसा ।

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥१८।६८॥
न च तस्मान् मनुष्येषु कश्चिन् मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥१८।६९॥
अध्येष्यते च य इमं धर्म्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥१८।७०॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान् प्राप्नुयात्पुण्यकर्म्मणाम् ॥१८।७१॥

---

## (२) इतिहासप्रकरणे विज्ञानप्रकरणोपसंहारः ।

कच्चिदेतच्छ्रुतं पार्थ ! त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनञ्जय ! ॥१८।७२॥

अर्जुन उवाच

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान् मयाच्युत ! ।
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥१८।७३॥

इति वैज्ञानिकगीता समाप्ता ।

---

## अथ इतिहासोपसंहारः ।

**सञ्जय उवाच**

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥१८।७४॥
व्यासप्रसादाच्छ्रुतवानेतद् गुह्यमहं परम् ।
योगं योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयम् ।१८।७५

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ।१८।७६
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ।१८।७७
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ।१८।७८

इति गीता समाप्तिः ।

इति वैराग्य-ज्ञानैश्वर्य-धर्मलक्षण बुद्धियोग-विद्याचतुष्टयी भगवद्गीतोपनिषत् संपूर्णा ।
समाप्तं चेदं विज्ञानभाष्ये शीर्षककाण्डापरपर्यायं मूलकाण्डं द्वितीयम् ।

---

